# कनकलोचनः

## (संस्कृतकथासङ्ग्रहः)

**प्रो. प्रभुनाथद्विवेदी**
आचार्यचरः, संस्कृत-विभागः
महात्मा गांधी काशी विद्यापीठम्
वाराणसी

श्रुतिप्रकाशनम्
वाराणसी

प्रकाशकः
**श्रुति प्रकाश द्विवेदी**
डी. ६५/४२१, पी.एन. २, निर्मलनगरम्
फुलवरियामार्गः, लहरतारा,
वाराणसी-२२१००२ (उ.प्र.)

प्रथमं संस्करणम् - २०१२ खि.
मूल्यम् - रु. २००.००



**प्राप्तिस्थानम्**
१. **शारदा संस्कृत संस्थानम्**
(सम्पूर्णानन्द संस्कृतविश्वविद्यालयसमक्षम्)
जगतगंज, वाराणसी-२२१००२
२. **हंसा प्रकाशनम्**
५७, नाटाणी भवनम्, मिश्रराजाजी का रास्ता,
चाँदपोल बाजार, जयपुरम् -३०२००१

मुद्रकः
**श्री राजकुमार जायसवाल**
डी.जी. प्रिण्टर्स,
बी. २२/३९८, खोजवाँ, वाराणसी-२२१०१०

**प्रो. राजेन्द्रमिश्रः**
**पूर्व-कुलपतिः**
**सम्पूर्णानन्द संस्कृत विश्वविद्यालयः**
**वाराणसी - २२१००२**

# नान्दीवाक्

आचार्यप्रभुनाथद्विवेद्युपज्ञाभिनवकथासङ्ग्रहस्य **कनकलोचनाभिधस्य** परिशीलनेन संस्कृतकथास्थेमानं प्रति विश्वासस्संवर्धते। संस्कृतकथानिकायाः प्रायेण तदेवं रूपं सम्प्रति, यदन्यासां भारतीयभाषाकथानिकानां समवलोक्यते। तथापि, एतावत्तु निश्चयेन वक्तुं शक्यते यदेवंगुणविशिष्टाः कथाबन्धाः प्राचीनसंस्कृतवाङ्मये नाऽसन्। इदानीन्तनकथानिकाः परितोव्याप्तं विविधसमाज-वृत्तं पर्यालोच्य कामपि हृद्याऽनवद्यसवंदेनां, चित्तोद्वेगकरं मर्म, हृदुन्माथिसम्प्रत्ययं वा समुपायनीकुर्वन्ति येन रसिकसमवायः प्रबुद्धो जायते।

प्रभुनाथस्य समधिकाः कथाबन्धाः सदुपदेशपद्धत्यैव (Didactic) गुम्फिता वर्तन्ते। एते परामर्शाः प्रायेण कथान्ते कतिपयश्लोकैः प्रकाशिताः। परन्तु सकलाऽपि कथा सद्धर्मोपदेशपरायणा प्रतीयते। **भाग्यलक्ष्मीरिति** शीर्षकेण प्रणीतायां दीर्घकथायां स कथादर्शः कथाकारस्य सम्यक्तया प्रतिपाद्यते। कश्चित्सामान्यस्सेवकः कथं स्वसेवया निष्ठया विश्वासेन च स्वामिनो हृदयं विजित्य तदुत्तराधिकारी जायते, कथञ्च युगलविहारिविग्रहं स्वाम्युपास्यं नवनिर्मिते महार्घमन्दिरे प्रतिष्ठाप्य दुर्लभं लोकयशोऽवाप्नोतीति वर्णयति कथानिका। यद्यपि नाऽत्र कथायां किञ्चिद् विलक्षणं कुतुकं, नास्ति रहस्यजिज्ञासा, नास्ति कथाविवर्तनजन्यद्वैधभावः— यथा प्रायेण कथानिकासु जायते। तथापि कथानिकेयं प्रारम्भत एवौत्सुक्यं सृजन्ती, समापनं यावत्सहृदयं प्रभविष्णुतया प्रभावयत्येव। सा च प्रभविष्णुताऽत्र इतिवृत्त एव वर्तते न पुनश्शैल्याम्। नेदमावश्यकं यत्कथाबन्धः पदे-पदे चमत्कारमेव संसृजेत्। कथाबन्धो न भवतीन्द्रजालप्रदर्शनम्। न भवति दूरदर्शनधारावाहिकस्य कस्यचित् चित्तान्दोलनक्षमा घटना। अतएव त्वरितहृदयसंवेगानुत्पाद्य न रञ्जयति कथावृत्तम्। कथावृत्तं तावत् शनैः शनैरास्वादधुरमुपगतं, चिरस्थायि, चिरानुभूयमानं किञ्च शाश्वतं किमपि परितोषसौख्यं जनयति। हिन्दीकथानिका-कारस्य **गुरुदत्तस्य** कथासाहित्येऽपि विलम्बितरसोद्रेकस्येयमेव पद्धतिर्दृश्यते।

वस्तुतः कथाजन्यरसानुभूतेरनन्तप्रकाराः सम्भवन्ति। यदि नाम कथाकारस्तत्रै-कस्मिन्नपि दाक्ष्यं, विशेषाधिकर्तृत्वञ्चाप्नुयात् तदपि बहु मन्तव्यम्। तत्र सर्वथा पारङ्गतोऽयं कथाकारः।

शीर्षकथा **कनकलोचनाख्या** यौतुकलुब्धस्य कस्यचिन्नरपशोर्वृत्तं प्रस्तौति। अस्याः कथाया अपि **अनेकविध**निर्वहणानि सम्भवन्ति। तथापि, **कथाकारेण** यन्निर्वहणं प्रदर्शितं तदेवासीत्तल्लक्ष्यम्। कथाकारस्य मनोऽभिलषितं तेन निर्वहणेनैव संसूच्यते। स्नुषाया निधनेन कनकलोचनस्य पश्चात्तापोऽपि सम्भवतिस्म, प्रायश्चित्तमपि सम्भवतिस्म। परन्तु तन्न प्रदर्शितं कथाकृता। वस्तुतः कथाकृत् अस्याः **पाशविकवृत्तेश्चिरन्तनतां यत्नशतापूर्यमाणताम् उत्तरोत्तरवर्धमानताञ्च** प्रदर्शयितुकामः। अतएवाऽसौ कनकलोचनं द्वितीयं सुवर्णावसरं प्रतीक्षमाणं प्रदर्श्यैव कथां समापयति।

कथाकारस्य कथाप्रस्तुतिप्रकारः, पात्रचरित्रचित्रणं, कथानिर्वहणञ्च सर्वमिदं तदधीनं तद्रुच्यनुकूलं तद्बुद्धिविलासप्रसारानुगामि एव भवति। पाठकास्तावत् कथामनुशीलयन्तोऽपि पदे पदे**ऽन्यथाभाव**मुपयान्ति— अरे, अत्र एवं भाव्यमासीत्, अत्र एवं कथनीयमासीत्, इदमपि वक्तव्यमासीत्, एवं योजनीयमासीत्, एवं समापनीयमासीदेवमादि।

वस्तुतः कथापाठकानामियमन्यथाऽनुभूतिरेव कथाकारस्य कथाशिल्पं प्रशंसनीयं विदधाति। सैव सफलता तस्य यदसौ एकं विकल्पं प्रस्तूय विकल्पान्तरं जनयति। विकल्पः, विसंवादः, बहुकोटिकसम्भावनमित्येत्सर्वमेव कथावैशिष्ट्यम्।

आचार्यप्रभुनाथद्विवेदी तु लब्धयशस्कः स्थापितः कथाकारः। अतएव तदुपज्ञकथानां समीक्षा गुणदोषदृशा नैव करणीया। **नव्यानामवदानं भवत्युपायनकल्पम्। उपायनस्य तु गुणदोषसमीक्षा सम्भवति। परन्तु सिद्धाचार्यस्य यदवदानं नैवेद्यकल्पं, तस्य का समीक्षा? नैवेद्यन्तु श्रद्धया शिरसा ग्राह्यमेव।**

त्वरयाऽनुशीलिता मयेमाः कथानिकाः। तथापि कथानामभिव्यक्ति-प्रवाहेणाऽभिभूतोऽस्मि। कथाकाराय शुभाशिषं मङ्गलकामनाश्च भूयोभूयो वितरामि।

**मिश्रोऽभिराजराजेन्द्रः**

**२६.८.२०१२ ई.**

# कथाकथ्यम्

सदुक्तिरियं प्रसिद्धैव- "भिन्नरुचिर्हि लोकः।" किन्तु, "कथाश्रवणरुचिर्हि सर्वलोकः" इति सूक्तिरपि सर्वैः स्वीकरणीया। नात्र किमपि विमतम्। येन मानवः सृष्टस्तेन तस्मिन्नेव क्षणे कथाऽपि सृष्टा। जने-जने, गृहे-गृहे, ग्रामे-ग्रामे, नगरे-नगरे सर्वत्र वन-पर्वत-सागरेषु कथाकथनरसलालाक्लिन्ना रसनाः मनःसंवादिसुखस्वनरसप्लुतपेयपानलुब्धमुग्धाश्च श्रुतिपुटाः शाश्वतं विराजन्ते। वाचिकपरम्परामारोहमाणेयं कथा क्रमशो देवदनुजमुनजहृदयाकाशमाच्छादयन्ती लिखितपरम्परां समवाप्य सर्वत्रैव परिव्यक्ता। निखिलब्रह्माण्डं कल्पनालोकमारोप्य हिन्दोलयन्त्याऽनया कथाप्रथयाऽशेषस्थूलसूक्ष्मजीवाजीवा विषयीकृताः। एवं हि सुसमृद्धं कथासाहित्यं विराजते गीर्वाणवाण्यां, का कथा खल्वन्यासु भाषासु!

सामान्यजन इवास्मिन् जनेऽपि लोककथाश्रवणप्रवृत्तिस्तु पूर्वत एवासीत्। वर्धमाने वयसि कथासाहित्यमपि प्रचुरं दृग्गोचरीभूतम्। संस्कृतकथाप्रथन-ग्रथनबीजं न्युप्तमनेक-आकाशवाणीकेन्द्राणां निदेशकचरैः संस्कृतानुरागि-भिरादरणीयैः डॉ. रजनीशप्रसादमिश्रमहोदयैस्तदङ्कुरितप्ररोहः संवर्धितः खलु सत्प्रेरणामृतसेचनैः सकलविद्याविद्योतितान्तःकरणैः परमपूज्यैरस्मद्गुरुवर्यैः प्रो. अमरनाथपाण्डेयमहानुभावैस्तथा च स्निग्धं वीक्षितो मे श्रद्धास्पदैर्मातुलवर्यैः कुलपतिचरैः स्व. डॉ. राजदेवमिश्रमहोदयैः। इदानीमपि पल्लवनप्रसन्नेषु

सन्ति सम्मान्याः प्रो. शिवजी उपाध्याय-प्रो. विद्याशङ्करत्रिपाठि-प्रो. यदुनाथप्रसाददुबेप्रभृतयः सुधीवराः। प्रो. त्रिपाठिपर्यन्तमेतान् महानुभावान् प्रति प्रणतिततिं विनयति जनोऽयं प्रो. दुबेमहोदयं च शुभाशीर्वादैर्युनक्ति।

अथ चतुर्थोऽयं कथासङ्ग्रहो गृहीताकारः प्रकाशतामेति। पूर्व-कथासङ्ग्रहेभ्यो यादृशी प्रीतिः संस्कृतकथारसिकैः प्रदर्शिता सा प्रीतिरनेनापि कथासङ्ग्रहेण प्राप्स्यत इत्यस्मै जनाय कृपालुपाठकानां प्रसाद एव स्यात्।

अधुना संस्कृतजगति सुप्रतिष्ठिताः सम्भृतयशोवितानाः सहृदय-शिरोमणयः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य मान्याः कुलपतिचराः समादरणीयाः प्रो. अभिराजराजेन्द्रमिश्रमहाभागा अस्य ग्रन्थस्यामुखं कृपया लिखितवन्त इति प्रमिताक्षरमपि तेषां स्निग्धाशीर्वचो लब्ध्वाऽयं जनस्तान् प्रति स्वीयं हार्दं कार्तज्ञं निवेदयति।

अन्ते च,

**यदि नास्ति रसो भावो हृद्यं वस्तु नवं न वा।**
**भवतामीहते किन्तु दृष्टिं कनकलोचनः।।**

प्रबोधिनी एकादशी
२४.११.२०१२ ख्रि.

विदुषां विधेयः
**प्रभुनाथद्विवेदी**

# कथाऽनुक्रमः

# भाग्यलक्ष्मीः

अस्ति ममैको दूरस्थः सम्बन्धी एकस्मिन्नगरे कस्यचिद् धनाढ्य-महाजनस्य सेवकः। तं महाजनं निरपत्यं निरीक्ष्य स्वकीयं सौभाग्यं मन्यमानः स सर्वतोभावेन तस्य सेवाविधावप्रमत्तो दत्तचित्तो बभूव। 'सेवाधर्मः परमगहनो योगिनामप्यगम्य' इति सुदुष्करं सेवाकर्म कुर्वता तेन शनैः शनैः तस्य प्रीतिमवाप्य विश्वासभाजनत्वमप्यधिगतम्। स सेवकोऽपि सन् पुत्रादप्यतिरिच्य तस्थौ। महाजनोऽप्यस्यैव चक्षुषा पश्यति, अस्यैव कर्णेन शृणोति। स एव तस्य हस्तपादावभवत्। सर्वस्य कार्यजातस्य समस्तं भारमस्यैव स्कन्धे निक्षिप्य विगतचिन्तः स गोमुखे दक्षिणकरं विन्यस्य सततमक्षमालापवृत्तिं स्वीचकार। कालक्रमेणेहलोकस्य धर्मपारवश्यात् प्रथमं तस्य महाजनस्य भार्या दिवंगता। अतः परमस्योपरि महाजनस्य निर्भरत्वं किमपि समधिकतरं जातम्। महाजनस्य वैभवं स सम्यग् विजानाति। प्रत्यक्षकोषं त्वनुदिनं पश्यति किन्तु गुप्तकोषं प्रत्यनभिज्ञतया नित्यमेव सोत्कण्ठं विचारयति।

एकदा महाजनस्य तस्य कश्चिद् दूरवर्ती बान्धवः सेवायामुपस्थितो बभूव। 'ममान्तिमे जीवनकाले स सम्बन्धं पुरस्कृत्य सम्पत्तिलोभादागत' इति समनुभूय महाजनस्तं तिरस्कृत्याऽपाकरोत्। तत एनमाहूय स महाजनः स्वकीयस्य गुप्तकोषस्य कुञ्जिकां करे कुर्वन् सदयं सस्नेहञ्च प्रोवाच- "सौम्य! तवैकनिष्ठसेवया जितोऽहं स्वकं सर्वस्वं तुभ्यं समर्पयामि। सुमहता प्रयत्नेनाऽयं पैतृकः कोषो न केवलं संरक्षितोऽपि तु मया सर्वात्मना

संवर्धित एव। अथातोऽस्य त्वमेव स्वामी। यथा ते रोचते तथा कुरु। त्वं तु मम दत्तजीविक आसीः। किन्तु यथा त्वया मदीया स्वजनादप्यतिरिच्य सेवा कृता क्रियते च, तस्यैव फलमेतत्। यदि कश्चिन्नामाऽभवन्मे पुत्रः, सोऽप्येतादृशीं सेवां कर्तुमसमर्थः स्यादित्यहं मन्ये। गच्छ, सेवस्व स्वकीयां भाग्यलक्ष्मीम्।"

सोऽपि प्रगल्भसेवको निजं भाग्योदयं समक्षमुपस्थितमपि शङ्कितमनसा तमपश्यन्निव, सत्यमपि महाजनस्य वचः परिहासविजल्पितमिवानुभूयमानः, सुमधुरनादेनाऽऽकृष्यमाणोऽपि भीतकुरङ्ग इव चकितनयनः, पिपासाऽऽकुलोऽपि समक्षं विमलोदकराशिं मृगमरीचिकामिव मन्यमानः, चतुरवणिग्बुद्धिजालनिपतनाऽऽशङ्कयाऽऽत्मनो रक्षामार्गमन्विष्यन्निव तां कुञ्जिकां ग्रहीतुं नोत्सहते स्म। महाजनेन वारं वारं भृशं प्रणोदितः स कथं कथमपि कम्पमानकरेण तां साध्वसमयीमपरिचितां नायिकामिव कुञ्जिकां साचिनयनकोणतः पश्यन् स्पृष्टवान्। पुनश्च करे कृत्वा तां शिरसि निधाय ततो महाजनस्य पाणौ दधौ। सोऽपि महाजनस्तं सेवाजीविनं कृतकपुत्रमिव स्निह्यन् सकरुणं वात्सल्यवचसाऽऽहूय सान्त्वनावचोभिराश्वासयन्- "अलं भीत्या। यावदहं जीवामि, न किमपि चिन्त्यम्। यतो हि कोषरहस्यं मां विहाय नान्यः कश्चिज्जानाति" इत्युक्त्वा तां कुञ्जिकां तस्मै समुष्टिबन्धं समर्पितवान्। पुनः स सेवकः- "नहि, स्वामिन्! यावद् भवान् जीवति, तावदियं भवत्पार्श्वे एव तिष्ठतु। चिरं जीवतु भवान् ममाप्यायुर्युनक्तु प्रार्थयेऽहमीश्वरमि"त्युक्त्वा स कुञ्जिकां तस्यैव शय्यायाः शिरःस्थाने उपधानस्याधस्तान्न्यस्तवान्। परन्तु कुञ्जिकां पुनर्महाजनाय समर्प्य स तं गुप्तकोषं विस्मृतवान्, इति न। स कोषस्तु तस्य चित्तपटले निरन्तरं भ्रमति स्म।

अथैकदा सायंकाले सावकाशः स सेवको मनसि चिन्तितवान्- "अस्मिन् महति सौधेऽयमहमेकाकी। स्वामी चायं महाजनो जराजर्जरकायः क्षीणशक्तिर्वृद्धोऽसमर्थेन्द्रियः। नापि कश्चित्प्रहरी दौवारिको वा। स बान्धवः खल्वनेन धिक्कृत्य निराकृतः। महाजनोऽयं लक्ष्मीपतिवैभवसम्पन्न इति लोकप्रसिद्धिः। सर्वथा सङ्कटापन्नोऽस्मि। इमं त्यक्त्वा क्वचिद् गन्तुमपि न शक्नोमि। स्नेहवशाज्जनो पापशङ्की भवत्येव। इदानीं तु देव एव सहायः। अतः किमपि सुरक्षोपायस्तु करणीयः"- इत्येवं बहुधा विचार्य भार्यां प्रति

ग्रामं पत्रं प्रेषितवान्- 'पुत्रेण सहेहागच्छत्वि'ति। नान्यत् किमपि सङ्केतितवान्। पत्रं प्राप्य सा वराकी ग्रामललना कुमारेण सह प्रथमतया क्वचित्सुदूरं नगरमाजगाम। पत्रोल्लिखितावाससङ्केततस्तत्र पत्युरधिष्ठानं प्राप्तवती।

भार्यया सङ्गतः समाश्वस्तो विगतभीः स सेवकस्तस्य महाजनस्य सेवां पूर्वतोप्यधिकां कर्तुं समारेभे। किन्तु कतिपयैरेव मासैर्महाजनः पथ्यैराहारैरोषधिभिश्च बहुसेवितोऽपि वृक्षात्पक्वफलपिण्ड इव प्राणाच्च्युतो दिवङ्गतः। तेनैव सेवकेन तस्य सर्वमौर्ध्वदैहिकं कर्म सनिष्ठं सश्रद्धं च निर्व्यूढम्। न कश्चित्तस्य महाजनस्य बन्धु-बान्धवः ज्ञातिसम्बन्धी वा स्वाधिकारं विज्ञप्तुमागतवान्। परिसमाप्ते सर्वकर्मणि स सेवाजीवः तस्योत्तराधिकारी कदाचिदेकदा निशीथे यदा भार्या पुत्रश्च प्रगाढनिद्रायां सुखं सुप्तावास्तां, तां कुञ्जिकां प्रयुज्य तथाभूतां गुप्तकोशरक्षिकां दृढां लौहमयीं भित्तिनिखातां सुविशालां मञ्जूषामनावृतामकरोत्। उद्घाटिते सति कपाटे भास्वरं स्वर्णराशिं तेजोमयं रत्ननिचयं विलोक्य तस्य नेत्रे चमत्कृते। स गूढकक्षस्तेजोभासा दिदिपे। निशीथं चण्डभास्करमण्डिते मध्याह्ने परिणतम्। तथाभूतं तं कनकरत्ननिकरं विस्फारितनेत्राभ्यां दर्शं दर्शं स रोमाञ्चितः। हृदयप्रविष्टेन भौतिकरागेण, महाजनस्मृत्यनुरागेण, समुल्लासेन, आनन्दोत्सवविलासेन, हर्षाऽपरिमितावेगेन दरिद्रोऽपि कुबेरपदवीं गतः क्षणमात्रेणैव स स्वर्णसिंहासना-धिरूढ इव, किं करणीयमिति मतिविमूढ इव, वसुधातलादुत्प्लुत्य स्वर्गभूमौ प्ररूढ इव, स्वयंदत्तहस्तया लक्ष्म्या सद्यो व्यूढ इव, चकितनयनः समुद्भासमानं तं तेजोराशिं दर्शं दर्शं समाधिकस्पन्दितेन हृदयेन स्थितोऽपि तरलितकराङ्गुलीभिः स्पर्शं स्पर्शं स्वर्णदण्डान्, परामृशन् रत्नराशिं मुद्रांश्चैकैकशः करे कृत्वा तद्भारान् सम्भावयन्, तस्मिन् रत्नस्वर्णनिचये निमज्जन् स्वात्मानं स नैव ज्ञातवान् यत्कदा भार्या पुत्रश्चागत्य पृष्ठदेशे स्थितौ लक्ष्मीलीलां प्रेक्षेतः। 'किमेष कश्चित्स्वप्नः किमुत वेन्द्रजालं किमिदं सत्यमसत्यं वेति स्वयमपि निश्चेतुमशक्नुवन् हर्षोद्वेगान्महतोल्लासेन यावद् भार्यामाकारयितुं विवृताननो विवर्त्य स्थितस्तावद् द्वावपि विलोक्य स्तम्भितः। भार्या पुत्रश्च कदाऽऽगत्य पृष्ठे स्थिताविति तेन न लक्षितम्। क्षणमवाग्विरम्य सहसा तस्य मुखान्निःसृतम्- "अये! पश्य, पश्य। दैवयोगादस्माकं सौभाग्येन सुमेरुशिखर एवानायासं विच्छिन्नोऽत्र गृहे पतितोऽथवा, रत्नाकरेण करुणालयेन वरुणालयेन वीचिभिरुत्क्षिप्याऽऽत्मसमृद्धिर्मह्यमुपायनीकृताथवा, देवेन धनपतिना

राजराजेश्वरेण मम पूर्वजन्मकृतं किमपि पुण्यमालक्ष्य निजोऽक्षय्यकोष एव मत्समक्षं समर्पितोऽथवा, मां स्वकीयानुग्रहपात्रं मन्यमानया भगवत्या महालक्ष्म्या प्रसादीकृतोऽयं कनकरत्नराशिः। अहो, यः कदाचित्किङ्किणीमपि न लभते स्म, यस्ताम्रमुद्रामपि न दृष्टवान् तस्य समक्षं विलसतीदं हितरमणं हिरण्यम्। स्वर्लोकनन्दनकाननाच्च्युतानि कल्पवृक्षफलानीव सन्त्येतानि हिरण्यानि भास्वराणि च रत्नानि। अचिन्त्या खलु परमेश्वरस्य मायालीला! यथाकर्तुं यमभिलषति तं तथैव करोति। कदा कुत्र कथञ्चाकिञ्चनं जनं काञ्चनमयं काञ्चनमयञ्च जनमकिञ्चनं करिष्यतीति को जानाति?

एवमन्यैरपि बहुभिर्विकल्पनैस्तत्रस्थानां तेषामविदितगतयामा रात्रिरेव व्यरंसीत्। तं कनकरत्नराशिं दर्शं दर्शं निरन्तरमपि तेषां नेत्रं तृप्तिं न जगाम। कियत्कालपर्यन्तं ते तथैव तत्र स्थितिं अविधास्यन् यदि द्वारकपाटे हस्ताघातशब्द इव नाश्रूयत। 'कोऽयं भविता आगतोऽकाले?'- इति सत्वरं तां बृहन्मञ्जूषां पिधाय कुञ्जिकां संगोप्य, मनसा भीतोऽपि कायेन सन्नद्धोऽभवत्। रात्रेरन्तिमे प्रहरेऽपि चौराः प्रगुणीभवन्ति किन्तु नायान्ति द्वारकपाटे हस्तं दत्त्वा। तदानीं तस्य मनसि नानाविधा विकल्पाः प्रादुरासन्। यथा हि- 'इयं गुप्तकोषवार्ता त्वावयोर्मध्य आसीत्, न पतिता खलु षष्ठे कर्णे। कथं कोऽपि ज्ञास्यति? अथवा, भवेन्नाम केनचित्पूर्वमेव ज्ञातम्, अथवा, 'महाजनो मृत' इति ज्ञात्वा तस्य कश्चिदलीकोत्तराधिकारी समुत्पन्नः, अथवा, मामेकाकिनं मत्वा कश्चिन्नृशंसो लुण्टाको दुरागतः। अन्यथाऽस्मिन् समयेऽनागतायामपि प्रत्यूषवेलायां कस्यचिदागमनस्य किं प्रयोजनम्? भवतु नाम, पश्यामो वयम्। एतस्मिन्नन्तरे पुनरपि कपाटे हस्ताघातशब्देन सहाऽऽह्वानवचोऽप्यश्रूयत- "द्वारमुद्घाटय" इति। 'शब्दसंयोगात्कश्चित्साधुरेव प्रतीयते' इति मनसा वितर्क्य, किन्तु को जानाति सद्वेषेऽपि सद्वेषा धूर्ताः क्रूरलोभिनोऽवसराकांक्षयेतस्ततो भ्रमन्ति समुत्पादयन्ति च भ्रमम्। उक्तं हि- 'विश्वस्तमपि नातिविश्वसेत्', विशेषतः सम्पद्विषये। इयं लक्ष्मीः किं किं न कारयति? तया प्रेरितः सुहृदपि जन्मान्तरशत्रुर्जायते, सुजनोऽपि दुर्जनो भवति, कुटुम्बिनोऽपि सन्तापकारिणो भवन्ति, बान्धवा अपि वैरायन्ते, वीतरागा अपि दुर्मनायन्ते, कुलीना अपि व्यभिचरन्ति, धीरा अपि मर्यादामुल्लंघ्याऽधीरा भवन्ति। एवं नानाविधाभिराशङ्काभिः पूरितमानसः स भार्यां पुत्रञ्च लगुडहस्तं कृत्वा पश्चाच्च संस्थाप्य स्वयमपि करणीयं सम्प्रधार्य शङ्कात्रासोद्विग्नः, 'अयमहमागतो

भो:'' इति दृढस्वरेणोक्त्वा मन्थरगतिको द्वारदेशं गत्वाऽर्गलां विमुच्य कपाटमुद्घाटितवान्। समक्षं द्वौ पुरुषावास्ताम्। तयोरेको वेषेण भद्रो महाजनोऽपरश्च तस्याङ्गरक्षक इव प्रतीत:। अभिवादनपुरस्सरं यावत्स किमपि ब्रूते तावदेव स भद्रपुरुष: प्रोवाच- ''क्षम्यतामकालखेदाय। किं करोमि? अस्य रेलयानस्याऽऽगमनकाल एवैतादृश:। यानादवरुह्य विचारितं मया यत्प्रथमं तव दर्शनं कृत्वैवाऽन्यत्किमपि करोमि। प्रयोजनानुरोधादेतदनिवार्य-मप्यासीत्। अतो रेलस्थानकादविचलितपथाऽत्रैव प्राप्तोऽस्मि। अथ प्रकृत-मनुसरामि। अहं भवन्तं सम्यग् जानामि, मां तु भवान् न जानाति। अस्म्यहमस्य गृहस्वामिनो बालसखा कश्चिच्च सम्बन्धी। मित्रमुखादेव मया भवद्विषये बहु श्रुतम्। कोलकातानगरेऽस्ति मम व्यवसायप्रतिष्ठानम्। तत्रैव कुटुम्बिजनैस्सह निवसामि। तव स्वामिनो मम चैकस्मिन्नेव ग्रामे जन्म। शैशवे सहैवावाभ्यां विद्याऽभ्यस्ता क्रीडां कूर्दनञ्च कृतम्। पश्चाद् व्यवसाया-र्जनधिया स इहागतोऽहं च कोलकातानगरं गतवान्। आवयो: परस्परं मेलनं, पत्रव्यवहार: संवादस्थापनं तु प्रचलन्ति स्म। तस्य सुदुस्सहां निधनवार्तां निशम्याऽगतोऽस्मि। आगमनस्य चापि विशिष्टमेकं प्रयोजनं वर्तते।''

स सेवकोऽपि स्वामिमुखात् प्रायेण कोलकातानगरेऽवस्थितस्य कस्यचिदभिन्नमित्रस्योल्लेखं क्रियमाणं शृणोति स्म। अयमेव तन्मित्रमिति वचोभिरेभिरभिज्ञाय भार्यायै पुत्राय च दत्तसङ्केत: तं सादरं सविनयं गृहाभ्यन्तरमामन्त्र्य आस्थानमण्डपे समुपवेशयामास। समयोचितं समुचितमातिथ्यं कृत्वा बद्धाञ्जलिस्तस्यान्तिके तस्थौ। सोऽपि भद्रपुरुष: पुनरब्रवीत्- ''कियद्वर्षपूर्वं तव स्वामी सपत्नीको मकरसङ्क्रान्तिपर्वणि गङ्गासागरतीर्थमवगाहितुं गत आसीत्। तस्मिन् तीर्थयात्राक्रमे मदीय एवावासेऽवस्थित: स तत: प्रस्थाय गङ्गासागरस्नानं विधाय पुनरावर्त्य समागतवान्। एकदा मया सह रत्नापण-वीथिकासु पर्यटता तेन भास्वरा काचिदपूर्वच्छटाविराजिता मनोमुग्धकरी दिव्यधामधरी नेत्रनिर्वाणकरी संसारसागरतरीव शुभोदयदर्शना श्रीयुगलच्छबिरचना प्रसन्नवदना प्रत्यक्षपुण्यदायिनी अक्षयप्रीतिविधायिनी पुष्परागनीलमणिकरम्बितरत्न-निर्मिता श्रीराधाकृष्णस्य मधुरमधुरा मूर्तिरवलोकिता क्वचित्काचमञ्जूषानिहिता। दर्शनमात्रेण मूर्तेस्तस्य पादौ कयाचिददृश्यप्रेरणयाऽनायासमेव तद्दिशं प्रचलितौ। आपणपीठिकामारुह्य स आपणिकं सम्बोध्य प्रोवाच- ''भद्र! श्रीयुगलविहारिण: प्रतिमेयमपूर्वैव। यद्यपि भगवन्तं क्रेतुं क: समर्थ:? तथाप्यस्या: मूर्तेर्यन्मूल्यं

भवता निर्धारितं तदाख्यानेनाऽनुग्राह्योऽयं जनः। अहमपि तां रत्नमयीं प्रतिमां दर्शं दर्शं स्वात्ममुग्ध इव तस्य पृष्ठदेशे स्थितः। मनस्यासीद्यत् स आपणिको मणिकारः किं वक्ष्यतीति। मणिकारस्तु तस्य वचसाऽनुरक्त इव स्वकीयं वदनं प्रसादसदनं विधाय, समक्षं स्थापितमुष्णीषं शिरसि निधाय, स्वासनादुत्थाय अभिवादनपुरस्सरमावां सादरमामन्त्र्यैकस्मिन् शोभासने समुपवेशयामास प्रोवाच च- "रत्नपरीक्षकोऽस्मि। यदि मम नेत्रे मां न वञ्चयतः, यदि मेऽनुभवो नास्ति निःसारः तदा निश्चप्रचं भवन्तौ द्वावपि धनिष्ठरत्ने वदान्यवरौ च। न हि मृगराजः शाद्वलं कवलीकरोति। न हि नन्दनवने चित्रफला प्ररोहति। न हि महतां दृष्टिरसारवस्तूषु निपतति। महान्तो महद्भिरेव प्रीतिं कुर्वन्ति। योग्यो योग्येन गच्छति। न जाने कियन्तो जना आगत्य मूर्तिमिमां सुचिरं सुनिपुणं निरीक्ष्य गतवन्तः किन्तु भवन्तावेव दृष्टिकोणत एव मूर्तेरस्याः सारवत्तामभिज्ञाय क्रेतुं क्रोडीकर्तुञ्च मनश्चक्रतुः। मूर्तेरधोभागे आधारदेशे मूर्तिकारेण तेन रत्नविज्ञेन मूल्यमुट्टङ्कितम्। अतस्तत्रैव तद्दृष्टिपथे कर्तुं प्रसीदतु" इति मितेन वचसा विज्ञाप्य स भद्रविपणिको रत्नापणस्यावां द्वावपि सादरं तां मूर्तिं दर्शयामास। मम मित्रं, तव स्वामी, महाजनेषु महाजनः स तां सर्वाश्चर्यमयीं मूर्तिं करे कृत्वा विलुब्धनेत्राभ्यां पुनः पुनः पश्यन् तस्या आधारमूले समुट्टङ्कितं मूल्यं पपाठ। पठित्वा च सस्मितं मां दर्शयामास। 'अमूल्यं खल्विदं रत्नमूर्तिरत्नमि'त्युक्त्वा, तन्मूल्यं दृष्टिगतं कृत्वा तां मूर्तिं पुनरपि तस्य करे कृतवान्। सोऽपि मणिकारः साभिप्रायदृष्ट्या निर्निमेषत आवां निभालयति स्म। सम्भावयामि, तदानीं तस्य मनस्यासीत्- 'श्रीयुगलविहारी किं करिष्यति? अपि भक्तिभावितान्तःकरणं ग्राहकं प्रसादयिष्यति अथवा, ममैवापणमलङ्करिष्यति? अतो, अचिन्त्या खलु तस्य लीला!' इति। तव स्वामी श्रीमान् मम मित्रं स महाजनः कञ्चुकान्तः निविष्टगुप्तकटिबन्धादेकं दीप्तिभास्वरं हीरकरत्नं निस्सार्य तस्य मणिकारस्य करेऽकरोत्। अपूर्वरत्नस्य तस्य भासा मणिकारस्य नेत्रतेजः प्रतिहतम्। सहसा तन्मुखान्निर्गतम्- "अहो, अप्रतिममिदं हीरकरत्नं, न कदापि दृष्टं, श्रुतमेव केवलम्। अनेनैकेनैव रत्नेन न केवलं श्रीयुगलविहारिणो मूर्तिरपितु मदीया विपणिरेव क्रीता तथापि देयावशिष्टेनाऽधमर्णो भवामि। कृपया गृह्णातु मूर्त्या सह विपणिगतं समस्तं रत्नजातम्।" "न हि न हि, केवलमेषा मूर्तिरिव"- भावविह्वलो मम मित्रं महाजनस्तव स्वामीत्युक्त्वा तां मूर्तिमादाय, मस्तकं

पादयोरानम्य शिरसि च निधाय तस्थौ। सोऽपि मणिकारो मूर्तिस्थापनाय रजतमञ्जूषामेतन्निमित्तमेव विनिर्मितां सुशोभनां सुकोमलान्तोवस्त्रमण्डितां पत्रभङ्गिभूषितावरणां निःसार्योपस्करप्रकोष्ठादानीय संस्थाप्य च समक्षं मूर्तिं च तामतिश्रद्धया महतादरेण करे कृत्वा सुकोमलवस्त्रगुम्फेन मृदुकरेण सुनिपुणं प्रमृज्य वारं वारं स्निग्धनयनाभ्यां निभाल्य तस्यां मञ्जूषायां स्थापितवान्। सेवादक्षं कमपि नियोज्यपुरुषमाहूय मिष्टान्नं जलं चानेतुं समादिष्टवान्। यावत्परस्परं परिचयवार्तालापः प्रवृत्तस्तावदेव स पुरुषः सत्कारसम्भारमादाय समुपस्थितः। कृतमिष्टान्नप्रणयौ गृहीतैलाकर्पूरलवंगयुतताम्बूलवीटिकौ प्रस्थातुकामा-वावामनुभूय स मणिकारोऽप्युत्थाय करबद्धाभिवादनविधिना, "अपि कमपि रक्षिपुरुषं प्रेषयामि गृहं यावदि"ति सविनयं पृष्टवान्। "एष श्रीयुगलविहारी आत्मरक्षासमर्थः किन्तु जगद्रक्षकः" इति परिहासपूर्वकं व्याहृत्याऽऽवां ततो निर्गतवन्तौ।

अपरेद्युः तव स्वामी मूर्तिं ममाभिरक्षायां सन्धाय दक्षिणभारतस्य तीर्थयात्रायै प्रस्थितवान्। यात्रां च परिसमाप्य स्वगृहमेवाजगाम। एषा मञ्जूषा तन्निहिता च मूर्तिः मदीयाऽऽवासे न्यासन्यस्ताऽऽसीत्। मित्रस्य निधनवार्तां निशम्य, 'मूर्तियुता मञ्जूषा तस्योत्तराधिकारिणे प्रापणीये'ति मनसि कृत्वा तां गृहीत्वा त्वामुपागतोऽस्मि। दुष्करं खलु न्यासरक्षणम्। अस्मिन् कर्मणि दैव एव सहायो भवति। इदानीं प्रत्यर्पितन्यासोऽस्मि विगतचिन्तः। 'त्वदीयं वस्तु गोविन्द, तुभ्यमेव समर्पये' इति कृत्वा मित्रस्योत्तराधिकारिणे तुभ्यमिदमलभ्यं रत्नप्रतिमावस्तु सम्प्रददे। "तवैवेदं न मम" इत्युक्त्वा तां मञ्जूषां तस्य करेऽकरोत्। एवमत्रागमनप्रयोजनमशेषं विधाय स भद्रपुरुषो रक्षिपुरुषेण सह गृहान्निर्गतः।

द्वारदेशं यावत्तमनुसृत्य सादरमभिवाद्य स सेवको तत्र तावत्तस्थौ यावत्स नेत्रयोरविषयो नाऽभूत्। ततो निवर्त्य द्वारकपाटं पिधाय सोत्कमनाः स मञ्जूषामुद्घाटितवान्। उद्घाटनेन सहैव स कक्षो दिव्यमूर्तिरत्नाभाभरितो जातः। स्वामिनो गुप्तकोशेऽपि तेन रत्ननिधिर्दृष्ट एव किन्तु यादृशी विशदरत्नाभाऽस्या मूर्तेर्न तादृशी तत्र। अहो, अलौकिकोऽयं विग्रहः कल्पनातीतः। प्रभो, अचिन्त्या खलु तव लीला। धन्यानि सन्ति तानि रत्नानि यानि प्रतिमानिर्माणे प्रयुक्तानि। अस्मिन् कलियुगेऽपि सन्ति वदान्या निर्लोलुपा नररत्नानि मित्राणि साक्षादिव धर्मविग्रहास्तपोधना ये कुबेरनिधिमपि तृणाय

मन्यन्ते। मम स्वामिनः सखाऽयं महाजन एव तन्निदर्शनम्। महर्घां रत्नप्रतिमां न्यासभूतां संरक्षितां निर्लोभतो मृल्लोष्ठवदादायाऽविचलितः सत्पथान्निश्छलमानसो मत्करेऽकरोदेतावद्दूरादागत्य। सत्पुरुषादन्यः कः करिष्यति? भवतु नाम, भगवान् द्वापरलीलावपुर्युगलविहारी मामनुग्रहीतुमत्र ममैव सौभाग्यात्पूर्वजन्मार्जित-पुण्यात्पदं धारितवानिति महान्मे प्रमोदः। अस्यैव साहाय्यादधुना करिष्ये स्वामिनः कीर्तिमक्षुण्णामिति रजतपिटकं पिधाय गृहाभ्यन्तरं नीत्वा स्वामिनः शयनकक्षे शुचौ देशे पवित्रे रजतपीठे स्थापयामास।

महाजनस्य प्रतिष्ठानप्रतिष्ठारक्षणदक्षः सत्पक्षः स सेवकः समाजे श्रेष्ठिवर्य इति मानमलभत। मनसि महतोल्लासेन लसितस्याऽपि तस्यानने वचसि च सैव सरलता, तरलता निरभिमानता विराजते स्म। 'विगतरात्रौ किमप्यपूर्वं घटितमि'ति तस्य हर्षविस्मय/विषादरहितेन समभावसहितेन मुखमण्डलेनाऽनुमातुं न शक्यते। तस्य दिनचर्या पूर्ववदासीत्। कर्मचारिणो यथापूर्वं यथाकालञ्चागत्य स्व-स्व नियोगे संलग्ना बभूवुः। एतदवश्यमेवाऽभव-द्यत्पूर्वदिनापेक्षयाऽद्यास्मिन् दिने प्रत्यक्षलाभः समधिकतरो जातः। सर्वत्र प्रविभागेषु व्यापारव्यवहारोऽपि निर्विघ्नो निर्दुष्टचाभवत्। अपरा चैका महद्विस्मयकरी घटना सञ्जाता। अन्य नगरादागत्यैको महाजनः, "एतद्धनं देयमासीदि"त्युक्त्वा सपादलक्षद्वयं निष्कं समर्प्य निष्कृतिं कृतवान्। मया सुनिपुणमवलोकितं किन्तु कुत्राप्यायव्ययपञ्जिकायामस्य ऋणनिकायस्योल्लेखो नाऽसीत्। स्पष्टमेव मयानुभूतः श्रीयुगलविहारिण एव महिमा। तत्क्षणमेव मनसि शिवसङ्कल्पः प्रादुर्भूतः- 'अद्वितीयं सुशोभनं मन्दिरं निर्माय तत्र श्रीयुगलविहारिणं प्रतिष्ठापयामि' इति। गते सति तस्मिन् महाजने, व्यवहारनिकायस्य प्रधानकायस्थं समाहूय निर्दिष्टवान्- "अन्वेषय नगरे किमप्युपयुक्तं सुविस्तृतं स्थानं मन्दिरनिर्माणाय" इति।

अथ तृतीये दिवसे स कायस्थ आगत्य स्वस्वामिनं श्रेष्ठिवर्यं न्यवेदयत्- "अस्ति नगरस्य मध्य एवातस्त्वीशानकोणे जीर्णोद्यानमेकं सुविस्तृतमायताकारं प्रशस्तराजमार्गेण सम्बद्धं मन्दिरनिर्माणाय सर्वथोपयुक्तं सर्वसौविध्यसम्पन्नं सुस्थितम्। तस्य जीर्णोद्यानभूखण्डस्य स्वामी आसीन्महाराज-वीरभद्रसिंहः। स क्षत्रियराजपुत्रः कदाचित् पुराकाले प्रथितः सामन्त आसीत्। इदानीमपि तस्य वंशजा अस्मिन्नेव नगरे पश्चिमोत्तरदिग्भागे 'हवेलिया' इति वसतौ निवसन्ति। कालप्रभावादपकर्षं गतास्ते यथाकथञ्चिज्जीवंति। प्राचीनभवन-

भाटकसङ्ग्रहेण, भू-भवन-वस्तु विक्रयेण तेषामाजीविका प्रचलति। मन्ये, अचिरादेवेदं जीर्णोद्यानमपि विक्रयतुलामध्येष्यते। अतः परं भवानेव प्रमाणम्।''

स श्रेष्ठिवर्यः स्वकीयकायस्थमुखादिदमुपश्रुत्याऽतीवप्रसन्नो बभूव। नगरे ईदृशस्य भूखण्डस्यान्वेषणेऽपि स श्रीयुगलविहारिण एवानुग्रहमनुभूतवान्। महता प्रमोदेन स कायस्थस्य करे सुवर्णमुद्रामेकां कृत्वा तं सभाजितवान्। पुनश्च सायङ्काले तेनैव सह चतुश्चक्रकमश्वयान- ('बग्घी' इति) मारुह्य तत्र गत्वा जीर्णोद्यानं परितः भ्रामं भ्रामं सुनिपुणं परीक्षितवान् प्रयुक्तवांश्च भूरिशः साधुवादान् तं कायस्थं प्रति। ततो निवर्त्य गृहं केनापि मूल्येन तज्जीर्णोद्यानभूखण्डं क्रेतुं मनश्चकार। अपरेद्युः निर्वर्तितस्नानसन्ध्यावन्दनः श्रीयुगलविहारिणं प्रणम्य तेनैव कायस्थेन सह जीर्णोद्यानस्वामिनं प्रति जगाम। कायस्थः परस्परं परिचयं कारयामास। श्रेष्ठिवर्यः प्रयोजनं समाख्याय तस्य पूर्वजानां गौरवं दानकीर्तिमहिमानं च निर्वर्ण्य तज्जीर्णोद्यानं क्रेतुं स्वीयां मनीषां प्रकटितवान्। सोऽपि 'धर्मकारणादागतोऽयं जनस्त्वैश्वर्यमांसलो लक्ष्मीवाहनो यथाभिलषितं मूल्यं दातुं सर्वथा समर्थ' इत मनसि विचिन्त्य लोभविक्षिप्तचित्तो निजानने मनस्तापमलीकं प्रदर्शयन् खेदविषादमिव प्रकटयन् बाष्पस्तम्भितकण्ठमिव नाटयन् ईषदश्रुस्निग्धनेत्रे प्रमार्जयन् निजकुलस्यातीतवैभवं स्मरन्निव दीर्घमुष्णञ्च निःश्वसन् अनायासं दक्षिणकराङ्गुलीभिः श्मश्रुगुम्फं परामृशन् महतायासेनेव मुखं विवृत्य कथंकथमपि शनैरुवाच- ''किं कथयामि? कालो हि दुरतिक्रमः। न हि पौरुषः किञ्चित्करोति, काल एव सर्वं करोति। स एव भाग्यमपि निर्माति, निखिलमपि करणीयं निष्पादयति। क्षणादेव रङ्को राजा भूत्वा राजते, क्षणादेव राजा रङ्को भूत्वा याचते। क्वाऽस्माकं पूर्वजाः क्व चाधुना वयम्? यद्भवान् क्रेतुमभिलषति तदुद्यानं त्वस्माकं पूर्वजानां यशःपताकाऽधुना नगरपादे विशीर्णा। तस्या विक्रयवार्तानाम्नैव हृदयं वेपते। यथावस्थितां तां विपन्नामपि दृष्ट्वा नेत्रे परमां प्रीतिं लभेते। जना अद्यापि तद्वैभवोत्कर्षं स्मरन्ति। तस्य पुष्पहासैर्वल्लरीविलासैः हरीतिमाप्रकाशैर्नगरस्य काऽप्यपूर्वा शोभा विस्फुरति स्म। प्रतिष्ठितस्यास्य कुलस्य नैकासु स्मृतिषु तस्योद्यानस्य पृथगेव विशिष्टं स्थानं विभाव्यते। साम्प्रतं भवदागमनेन सह, मन्ये, तस्यापीतिहासः परम्पराविच्छिन्न इव कामपि नूतनाकारतां गृह्णाति। किन्त्वनेन जल्पनेन किम्? काल एव भवन्तं प्रेरितवान्। अतः पूर्वं तदुद्यानं क्रेतुं न कश्चित्साहसिक आगतवान्,

नाप्यस्माकं मनसि तस्य विक्रयविचारोऽपि। सुष्ठुक्तम्- "ईश्वरेच्छा बलीयसी।" तामेवेश्वरेच्छां शिरसा सम्प्रधार्य तदुद्यानं भवत्पक्षे कर्तुमुत्सहे। यतो हि यत्प्रयोजनं भवताऽऽख्यातं तदपि महते शुभोदर्काय। सुवर्णं भूमिश्च निरन्तरं महर्घतां प्रयातः। अतः परं भवानेव प्रमाणमि"त्युक्त्वा तन्मुखासक्तदृष्टिः स तूष्णीं बभूव।

स श्रेष्ठिवर्यः प्रोवाच- "भवतां कुलकीर्तिरिव भव्यमन्दिरस्याधार-भित्तिर्भविष्यति। महतां न किमप्यदेयं भवति। तथापि श्रीयुगलविहारी मनोवाञ्छितं मूल्यं सुपुण्यं च दत्त्वैव तां भूमिं स्वायत्तां कर्तुमभिलषति। अतो निवेदयामि भवन्मुखादेव तन्मूल्यं श्रोतुमि"ति।

श्रोष्ठिवचनं श्रुत्वा स क्षणं विरम्य निजगाद- "अचिन्त्यो हि भगवतो महिमा। स यथेप्सति तथैव भवति। तथापि तस्योद्यानस्य विक्रयविषये न खलु पूर्वं कदापि विचारितम्। अतः कुटुम्बिजनैस्सह परामर्शं कृत्वैव किमपि वक्तुं शक्नोमि।"

श्रेष्ठिः, "भवतु नाम, सम्यग् विचारयतु भवान्। अस्मिन् विषये कुटुम्बिनामैकमत्यं त्वावश्यकमेव। प्रसीदतु भवान्, आगमिष्यामि श्वः पुनरपि प्रातःकाल एव" इत्युक्त्वा सादरमभिवाद्य ततः कायस्थेन सह निर्ययौ।

यस्मिन्कस्मिन्नपि युगे कायस्थास्तु कायस्था एव भवंति। ते समुद्रवीचिं गणयित्वा धनमुपार्जन्ति। धूलिनिचयेऽपि रज्जुरोहणं कुर्वन्ति। शुष्कनद्यामपि तरीं तारयन्ति। किं नामासम्भवं कायस्थानाम्? श्रेष्ठिवर्यस्यायं प्रमुखकायस्थोऽपि तादृश एव। स निशामुखे प्रदोषकाले निभृतं जीर्णोद्यानस्वामिनोऽन्तिकं गतवान्। गत्वा च तमुवाच- "मम स्वामिनः सकाशे धनस्येयत्ता नास्ति। स धरातलेऽपरो धनपतिर्यक्षराज एव। भवान् तस्य भूखण्डस्य यावन्मूल्यं वक्ष्यति स तद्दातुं समर्थो; निषेधो न करिष्यति। यतो हि तस्मै सा जीर्णोद्यानभूमिः मन्दिरनिर्माणार्थं भृशं रोचते। अहमेवास्या भूमेश्चयनकर्ता। अतो स्थिरे सति मूल्ये तत्र ममापि यथोचितांशो भवति। प्रथमं भवान् प्रकल्पितमूल्यादधिकं विज्ञापयतु। ततो ममानुरोधादवरोहतु। सोऽपि किमपि समाकलितमूल्यं वक्ष्यति। अहं तमपि संवर्धितुं प्रेरयिष्यामि। एवमवरोहाऽऽरोह-क्रमेण मूल्यं निश्चितं यास्यति। सम्पत्तिविक्रयव्यवहारे निश्चितमूल्यस्य प्रतिशतद्वयमितो राशिः माध्यमकाय देयो भवति। सम्यगेतद्विजानातु भवान्।

पञ्चमे कर्णे मा पतत्वियं वार्ता, केवलमावयोर्मध्ये तिष्ठतु। अनेन भूविक्रयराशिना भवतोऽपि दिनानि परावर्तितानि भविष्यन्ति।" सोऽपि कायस्थमिमं स्वपक्षपातिनमनुभूय मौन एव स्वीकृतौ पणबन्धस्य स्वकीयं शिरश्चालयामास। एवं प्रवहमानायां गङ्गायां हस्तौ प्रक्षाल्य स कायस्थः प्रफुल्लमानसो बभूव- "अहो, सौभाग्यलक्ष्मीर्मह्यमपि कमपि प्रसादं वितरति" इति।

अपरेद्युः प्रातःकाले निर्दिष्टनियतसमये श्रेष्ठिवर्यः कायस्थेन सह राजपुत्रगोत्रीयं जीर्णोद्यानस्वामिनमुपजगाम। कुशलक्षेमवार्तानन्तरं प्रकृतविषयस्य परामर्शः प्रारभत्। कायस्थवचनात् स भूस्वामी समाकलितमूल्यस्य द्विगुणं धनं श्रावितवान्। श्रेष्ठिस्तु, "भद्र! मूल्यमौचित्यदृशा प्रस्तौतु। इदं तु सम्भाव्यराशिं दूराद्दूरमतिक्रामति। भूमेः परिमापसंख्यानुरोधि एव मूल्यं भवेत्।" कायस्थो भूस्वामिनमालक्ष्याऽब्रवीत्- "समीचीनं भणति स्वामी। यथार्हं मूल्यमेवोचितम्। एतत्तु तस्य भूमेः सौभाग्यं यत्स्वामी मन्दिरनिर्माणार्थं क्रीणाति। एतत्तु भगवत्कार्यम्। भवानपि पुण्यार्जनं करोतु। नोचितमेतावन्मूल्यम्। तस्मादवरोहतु। नगरे भूमेर्मूल्यं कुत्र किं वर्तत इति वयमपि जानीमः।"

भूस्वामी सायासमुवाच- "पश्यतु, सा सुविस्तृता भूमिः नगरस्य हृद्भागेऽवस्थिता वर्तते। तन्मूल्यन्तु समतुल्यमन्यभूखण्डानां कथं भवेत्। भवद्दृष्ट्या कियन्मूल्यं भविता?"

कायस्थः स्वामिनः श्रेष्ठिवर्यस्य दक्षिणे कर्णे किमपि जप्त्वा भूस्वामिनं प्रति प्रत्यक्षमुवाच- "अस्मत्स्वामिनः सङ्कल्पस्तु लोकमङ्गलायैवास्ति। 'भूमेरर्जनं, मन्दिरनिर्माणं, परिसरसौन्दर्यीकरणं, प्रतिमास्थापनं ततश्च महोत्सवानुष्ठानमि'त्येतत्सर्वं प्रचुरव्ययसाध्यं, तत्र दैव एव सहायः। भवानपि सहायो भवतु" इति प्रार्थये।

"अहं समग्रस्यैव भूखण्डस्य वार्तां करोमि, न तस्याः कस्यचित्खण्डस्य।"

"सुष्ठु जानीमः, स्वामिनो मनोभिलाष एवाशेषभूमिमवाप्तुम्।"

"तद्भवानेव ब्रवीतु कियन्मूल्यं दातुं स्वामिनस्ते श्रेष्ठिवर्यस्य मनःसङ्कल्पः?"

कायस्थः पुनः श्रेष्ठिनः कर्णे जजाप। पश्चाच्चाऽब्रवीत्-

"भवतो वस्तु, अतो भवानेव ब्रवीतु यथोचितं परिकल्प्य। भवतो

मुखात्पुनरपि श्रुत्वैव स्वामी किमपि वक्ष्यति।''

''यद्येवमस्ति तच्छ्रृणोतु। यद्यपि भूमेर्विक्रये ममाधिकार: किन्तु नाहं स्वतन्त्र:। पूर्वजार्जितेषु सम्पज्जातेषु कुटुम्बस्य सर्वस्याधिकारो भवति। मया सर्वैस्सह साधु विमृष्टमेतद्विषये। समेषामैकमत्येन निर्णयो वर्तते यदुद्यानभूमि: सपादद्विलक्षस्वर्णमुद्रया प्रदेया। न कथमपि ततो न्यूनेन मूल्येन।''

भूस्वामिनो वचसा परमोत्साहित: कायस्थ: स्वामिनो मुखं वीक्ष्य प्रोवाच- ''स्वामिन्, किं ब्रवीति भवान्? अनेन महाशयेन तु स्वकीय: पक्ष: प्रस्तुत:।''

श्रेष्ठिवर्य: सस्मितं स्वकीयं मनोभावं प्रकटितवान्- ''किं ब्रवीमि? भगवत: कार्ये तु समुदारतया भाव्यो जनेन। वयं तु सर्वे तस्यैव कराङ्गुले: पुत्तलका:। यदि स इदमेव वाञ्छति, शिरसा धारयाम्येतद्वचनमस्य महानुभावस्य। मत्पार्श्वे यदपि विद्यते तत्सर्वं तेनेश्वरेणैव प्रदत्तम्। महती कृपा वर्तते खलु तस्य मनोपरि। 'अहं क आसम्, कश्चास्मी'ति सर्वे नगरवासिनो जानन्ति। अत:, 'त्वदीयं वस्तु गोविन्द, तुभ्यमेव समर्पये' इति कृत्वा स्वीकरोमि भूमिक्रयमनेन मूल्येन। अनुगृहीतोऽस्मि।''

भूमे: क्रयार्थमग्रिमं धनराशिं कमपि प्रदाय श्रेष्ठिवर्य: कायस्थेन सह गृहं न्यवर्तत। अचिरादेव तस्या उद्यानभूमे: क्रयस्य विक्रयस्य च वैधानिकी प्रक्रिया सम्पन्ना जाता। अनेन क्रयविक्रयव्यवहारेण सर्वातिशायिनी प्रसन्नता कायस्थस्य जाता। अस्या उद्यानभूमे: क्रयविक्रययोर्वृत्तं वने वह्निरिव निखिलेऽपि नगरे व्याप्तम्। तत्प्रयोजनमुपश्रुत्य नागरिका आबालवृद्धा नरनार्य:, ''शुभोदय: खलु नगरस्यास्य भगवतो प्रसादत: सञ्जात'' इति हर्षनिर्भरा बभूवु:। निष्प्रयोज्यमिदं जीर्णोद्यानं तु नगरस्यावस्करस्थानमिति प्रपन्नम्। तत्र निर्जनतामनुभूय तस्करा लुण्टाका अपि प्रवृत्ता आसन्। तेन मार्गेण पान्थानां रात्रिगमनं सर्वथा भयास्पदं भवति स्म। कदाचित्तु दिवसेऽपि निदाघकाले मध्याह्न एव परिपन्थिन: प्रगुणीभवन्ति स्म। तदुद्यानं निर्मक्षिकं विमृश्य व्यसनिनो मद्यपा द्यूतकरा व्यभिचारिणस्तत्र यथासुखं रमन्ते स्म। निश्चप्रचमनेन सुकृतेन तत्स्थानं न केवलं निरापदं भविष्यत्यपितु तत्र नगरस्य साक्षात्सौभाग्य-लक्ष्मीरवतरिष्यति।

अथैकदा शुभमुहूर्ते श्रेष्ठिवर्य: समाहूय सुयोग्यमनुभवसम्पन्नं सुविख्यातं

वास्तुकारं विविधमन्दिरनिर्माणदक्षमभियन्तारं च स्वकीयां योजनां प्रस्तुतवान्। कमप्यपूर्वं राधामाधवमन्दिरं भव्यातिभव्यमलौकिकशोभासम्पन्नं निर्मातुं समादिदेश। स स्वयं तयोः सह जीर्णोद्यानं गत्वा तत्स्थानं दर्शयामास। भू-आलेखं समग्रञ्च परिमापं दत्वा व्ययस्य कामपि चिन्तां विना मन्दिरस्य रूपरेखालेख्यम् तस्य मनोभावानुरूपं प्रस्तोतुं कथयामास। तदर्थं पक्षमितः कालो निर्धारितः। पुनश्च सदाचारिणं दैवज्ञमाहूय मन्दिरारम्भलग्नं शोधितुं निवेदयामास। प्राङ्मुखो दैवज्ञः पञ्चाङ्गमनुशील्य नभसो मासस्य शुक्लपक्षे सप्तम्यां तिथौ सूर्योदयादारभ्य मध्याह्नवेलापर्यन्तं शुभलग्नमिति दिदेश।

निर्धारितकालावधावेव सङ्कल्पितस्य राधामाधवमन्दिरस्य रूपरेखालेख्यं सुचित्रितं समवाप्य दृष्ट्वा च स श्रेष्ठी परमप्रीतोऽभवत्। अभियन्तृवास्तुकाराभ्यां तत्सूक्ष्मवैशिष्ट्यं सविशदमाख्यातम्। सर्वमालोच्य, 'नूनमेवेदं मन्दिरमद्वितीयं भविष्यती'ति तन्मनसि विश्वासो दृढतां गतः। श्रावणे मास एव भूमिपूजनार्थं लग्नमस्तीति जीर्णोद्यानस्य भूपरिष्काराय श्रमिकाः नियोजिताः। उद्यानस्य प्रचुरध्वंसस्खलनैर्विभ्रष्टा प्राचीनप्राचीरभित्तिरेव प्रथमं व्यवपातिता। तत उद्याननामभराः शुष्कप्राया अवशिष्टाः विरलाः पादपलतागुल्मक्षुपनिकराः समुन्मीलिताः। पुनश्चोच्चावचां भूमिं समतलीकरणेन विशोध्याऽवस्कारा-दीनामपसारणेन सर्वथा परिमार्ज्य मन्दिरनिर्माणकार्यस्य प्रथमोद्यमः सम्पादितः।

कर्मकाण्डशौण्डान् वेदज्ञान् धर्मशास्त्रपूताचारान् लोकव्यवहारनिपुणान् क्रतुक्रियाविधिमर्मज्ञान् ब्रह्मनिष्ठान् समुदारहृदयान् समुदात्तभावान्, निर्लोभान्, लोककल्याणपरायणान् यजमानशुभङ्करान् निजवैदुष्ययशोनिर्जितविश्वविभवान् महानुभावान् अयाचितदक्षिणादाक्षिण्यप्रसन्नमुखान् समस्तशुभलक्षणलक्षितशरीरान् कौशेयवस्त्रालङ्कारभूषितान्, विश्वनाथविभूतिचर्चितललाटान् गङ्गायमुनयोः संश्लिष्टवीचिलीलायितमूर्धजान् ताम्बूलरागरञ्जितस्मितपाटलाधरान् देवोपमान् काशिकेयान् पण्डितान् सादरमामन्त्र्य महतोत्सवेन सुविचारिते सुदिने शुभे लग्ने भव्यमन्दिरनिर्माणसमारम्भे आवाहितेष्टदेवपूजनं, भूमिपूजनं शिलापूजनं शिल्पोपकरणपूजनञ्च सविधि कारयामास। अभीप्सितादप्यतिरिच्य दानदक्षिणा-द्रव्यैः सर्वान् परितोष्य मनसा वचसा कर्मणा च शास्त्रलोकसम्मतां सपर्यां सत्कृतिं च विधाय प्रसादं लेभे। अपरेद्युः समुदिते सति भगवति सवितरि परिलक्षितशुभशकुनमये काले तस्य भूमेर्नितान्तकान्तप्रान्ते साक्षाद्विश्वकर्माणमिव वास्तुकारमभियन्तारं प्रधानशिल्पिनं च यथोचितविधिना सम्पूज्य अन्यांश्च

शिल्पिनः श्रमिकान् सत्कृत्य, तत्रोपस्थितान् ब्राह्मणश्रमणभिक्षुकान् दानेन परितोष्य श्रीयुगलविहारिणं भूयो भूयः संस्मृत्य मनसा नमस्कृत्वा, विघ्नवारणाय विघ्नेश्वरं पुनरपि प्रणम्य मन्दिरनिर्माणारम्भाय समादिदेश।

देवैर्दत्तहस्तमिवेदं मन्दिरं समाकलितकालात्पूर्वमेव पूर्णतां यातीति श्रेष्ठिवरस्य हर्षस्य पारमेव नासीत्। पूर्णतायाः प्रागेव निर्मीयमाणस्यास्य मन्दिरस्य चर्चा दिग्दिगन्तरेषु परिव्याप्ता बभूव। समुपजातकुतूहला जना दूरादपि तद्द्रष्टुं समायान्ति स्म। दृष्ट्वा च सविस्मयं- 'अहो, अपूर्णमेव मन्दिरमिदं भव्यमपूर्वं प्रतिभाति, पूर्णे सति काऽभिख्या भवेदि'ति परस्परं कथयन्ति स्म।

श्रेष्ठिवरस्तु नित्यमेव स्वयं गत्वा मनिदरस्य निर्माणप्रगतिमवलोकयति स्म। मन्दिरनिर्माणाय सर्वात्मना प्रयतमानः समर्पितश्चासीत्। अपूर्वमलौकिकम-द्वितीयमिदं मन्दिरं वैभवयुतं शोभाढ्यं वास्तुशिल्पत्रुटिहीनमनवद्यं निर्मातुरपि श्रद्धां रुचिं समुदात्तकल्पनां सौभाग्यलक्ष्मीञ्च समाख्यात्विति तस्य मनीषा। यथा यथा मन्दिरं पूर्णतां प्रत्यग्रेसरति, तथा तथा तस्य हृदयानन्दः परिचीयते स्म। मुख्यतया श्वेतमणिशिलाभिर्निर्मितेऽस्मिन् मन्दिरेऽन्येषामपि बहुमूल्यप्रस्तराणां यथास्थानं यथोचितं विनिवेश आसीत्। बृहदाकाराधारोन्नत-पीठिकायां मणिसोपानपरम्पराप्राप्तायां रत्नकुट्टिमवेदिकायामारचिताः सुविशालो-त्तुङ्गस्तम्भाः विद्धशालभञ्जिकाभिः सुमनोहराः चतुर्दिक् स्वागतोत्सुका देवपुरुषा इव प्रतिभान्ति स्म। मन्दिरशिखराग्रस्थापितस्वर्णकलशः स्वतेजसा सूर्यद्युतिमपि तिरस्करोति। हस्तिदन्तमणिखचितौ चन्दनमयौ मुख्यद्वारकपाटौ रजतदेहलीमिलितौ दूरादेव नेत्राणि समाकर्षतः। अभ्रंलिहः शिखराग्रा दूरत एव द्योतयन्ति मन्दिरवैभवम्।

अनुपमेया रचना खलु मन्दिरस्य गर्भगृहस्य। तत्र सर्वं स्वर्णमयं विचित्रमणिसोपानवेदिकासंयुतमास्थानमण्डपम्। प्रयतप्रशस्तवेदिकामधिरूढं रत्नखचितं स्वर्णमयं सिंहासनं तच्चोपरिधवलचन्द्रांशुकनिर्मितं मुक्ताजालवेष्टितं सितच्छत्रम्। सिंहासने 'मखमल' इति मृदुमसृण-पद्मरागेन्द्रनीलमणिवर्णवस्त्रा-स्तरणम्। उभयतः कनकदण्डाश्रितमयूराकृतिदीपाधारौ। भित्तिषु चतुरचित्रकार-रचितचित्रभागवतरासरसदृश्यानि। सर्वमेव नयनानन्दकरं हृत्प्रीतिविवर्धनञ्च।

चरणाद्रिरक्तपाषाणमयप्राचीरभित्तिवेष्टितो मन्दिरपरिसरोऽपि मन्दिरानुगुण-

मारचितः। मन्दिरस्य पुरोभागे नातिदूरे मणितटिनी पुष्करिणी धारायन्त्रेण संवलिता राराजते। समग्र एव परिसरो वीथिभिश्चतुष्कैः पीठिकाभिर्विभक्तो भक्तानां चेतोहरः सुप्रसाधितैरुद्यानैः सञ्छादितो यत्र ऋतुक्रमेण विविधवर्ण-कुसुमानि स्वादूनि च फलानि यथाकालं नयनसुभगानि सेविष्यन्ते भगवन्तं भक्तांश्च। मध्ये-मध्ये शोभाकरपादपराजयो मृदुलशाद्वलविस्तीर्णभूमयः, शाखालिङ्गितसुमनोभरकिसलयपरिपूरितनवलताप्रतिमानभूताः नवलताः, इतस्ततः श्रुतिसुखमधुरस्वनगीतयो विचित्रपक्षाभरणाः नानादिग्भागसमागता उत्पतन्त्यो नयनाभिरामा विहगश्रेण्योऽनायासमेव बालानां क्रीडाकुतूहलं जनयन्ति। किमधिकम्, यत्र यत्र दृष्टिः प्रसरति, तत्र-तत्र किमप्यनिर्वचनीयमद्भुतमेव दृश्यते।

एकदा प्रधानशिल्पी श्रेष्ठिवर्यमुपगम्य श्रोतृपेयं वचनं श्रावयामास— "मान्यवर, भवतो मनोऽभिलषितं भगवतोऽनुग्रहादचिरमेव पूर्णतां यास्यति। अतः परं भवानेव प्रमाणमि"ति।

सोऽपि श्रुत्वा हृष्टमानसः सधीरमुवाच- "भद्र! चिरं जीव। उपकृतोऽस्मि भवता। सत्यमेव श्रीयुगलविहारिणोऽनुग्रहोऽयमन्यथा क्व तस्यैश्वर्यं क्व च मादृशाः क्षुद्रजन्तवः। वस्तुतस्तस्यैव कृपालीला यद् भवद्भिरेतद्दिव्यमन्दिरं निर्मितम्। भवतु, तस्मिन् भव्यकायनिकाये भगवतः प्राणप्रतिष्ठाऽवशिष्यते। प्रतीक्ष्यं तद्दिनं शुभं लग्नं विज्ञातुं प्रयतनीयम्।" ततः सादरं समाहूतो दैवज्ञस्तन्मङ्गलानुष्ठानाय सुनिपुणं परीक्ष्य दिनं लग्नं च निर्धारितवान्। अनेन सहैव महानुत्सवः समारब्धः।

एतदर्थं पुनरपि काशीतस्त एव विधिज्ञा वैदुष्यमण्डिताः पण्डिताः सानुनयमामन्त्रिताः। विशिष्टातिथीनां नामानि परामर्शपूर्वकं नियतानि। तेषु श्रेष्ठिवर्यस्य स्वामिनः सखा कोलकातानिवासी महाजनो येन न्यासभूतेयं श्रीयुगलविहारिणो मूर्तिः समर्पितेत्येकोऽपरस्तु जीर्णोद्यानस्य पूर्वाधिकृत्सामन्त-प्रमुखः। अतिथीनां सपर्याप्रबन्धबन्धः श्रेष्ठिः पुत्रस्य स्कन्धे निक्षिप्तवान्। पूजोपचारसामग्रीणां सङ्कलनं प्रधानकायस्थस्य शिरसि न्यस्तवान्। अन्येषामपि कार्याणां यथायोगं विनियोगं कर्मचारिणां मध्ये कृतवान्। विनिश्चितमभूद्यत्प्राण-प्रतिष्ठानुष्ठानस्य यजमानः सपत्नीकः श्रेष्ठिवर्यो भविष्यति। मन्दिरस्य कपाटोद्घाटनं स्वामिनो बालसखा महाजनो विधास्यति शिखरे च ध्वजारोहणं

भूमेः पूर्वस्वामी सामन्तः करिष्यतीति।

सुस्थिरे शुभलग्नमये दिवसे स्वं स्वं नियोगमशून्यं कर्तुं सर्वे समुद्यताः सन्नद्धा आसन्। अतिथीनामागमनं पूर्वदिवसादेवारब्धः। श्रेष्ठिवर्येण कुमारो निर्दिष्ट आसीत्- "अस्मिन् सपर्याकर्मणि सर्वथाऽप्रमादेन भवितव्यमि"ति। स स्वकीयैर्मित्रैः कर्मचारिभिः सेवकैश्च सह तत्पर आसीत्। अतिथीनामावास-भोजनस्वल्पाहारगमनागमनादिकी व्यवस्था यथारुचि रुचिराऽचिरा विहिता सदोपलब्धा आसीत्। सेवकानां व्यवहारस्तु स्वर्णे सुगन्धिरिव सर्वेषां प्रमोदायाऽभवत्। विनतेन शिरसा, पूतेन मनसा हार्दमधुरैश्च वचोभिस्ते सर्वे सपर्यासन्नद्धाः कार्यकर्तारो दिवसममुं स्मरणीयं विधातुं प्रयत्नपरा आसन्। मुखमण्डलाकारत एव मनोगतं विभाव्य वाञ्छितं तत्क्षणमेवोपस्थापितं भवति यथा पूर्वत एव प्रसज्जमासीत्। कस्यचिदपि कार्यस्य वस्तुनो वा कृते वचोव्यवहारस्यावश्यकतैव नासीत्। समीहितमात्रेणैव तस्योपलब्धिः।

प्रधानकायस्थोऽपि सूचीबद्धं प्रकारविभक्तं समस्तवस्तुसम्भारं यत्रकुत्र-चिदुपलब्धं निर्धारितकालावधावेव स्वस्थानगत एव निजप्रभावानुभावतः समाहृतवान्। समाहृतवस्तून्यपि यानि कानि तु नासनपितु जातौ जातौ यदुत्कृष्टं तद्वस्तुरत्नमेवानीतम्। कार्यं साधु भवतु, वस्त्वपि सदेव स्यादिति धनस्य मूल्यस्य वा चिन्ता नासीत्। सर्वं हितरमणं स्यादिति श्रेष्ठिवर्यस्य मनीषा। अतस्तस्य सर्वासु क्रियासु हार्दमौदार्यं ललास। यथा स्वामिनो मनोऽभिलाषस्तथैव सेवकानां कर्तव्यावकाशः।

प्राणप्रतिष्ठायाः पूर्वसन्ध्यायामेव सुसज्जितं मन्दिरं तत्परिसरश्च दीपमालिकाभिरालोकित आसीत्। सोत्कण्ठकौतुकोत्साहवशात्कस्यचिदपि नेत्रे नासीत् कृतपदा निद्रा। मङ्गलगीतैः परस्परं वार्तालापैर्नानाविधकथा-कथनिकाभिः सा रात्रिरेव व्यरंसीत्। श्रद्धाभावितान्तःकरणयोः श्रेष्ठिदम्पत्त्योरौत्सुक्यस्य सीमैव नासीत्। ब्राह्ममुहूर्त एव माङ्गलिको विधिः प्रारभत। उतः प्राचीदिग्विभागे नभोमण्डले जगच्चक्षुश्चित्रभानुर्भगवान् भास्करोऽरुणपुरस्सरो रथारूढ उषसोऽनुराग-मिवादाय निरालम्बेऽपि मार्गे नित्यसङ्कल्पबलेनाऽग्रेसर्तुं लोकयात्रायां रश्मिभिः प्रणुदति हयान्, इतः श्रेष्ठिवर्यगृहान्मन्त्रोच्चारणैस्सह निष्क्राम्य पुष्पालङ्काराच्छा-दितायां मनोज्ञवस्त्रावरणभूषितायां रजतशिबिकायां संस्थाप्य लोकाभिरामस्य श्रीयुगलविहारिणः शोभायात्राऽपि समारभत। नगरस्य मुख्यमार्गेषु पुण्यवीथीसु

च परिक्रामन्ती सा शोभायात्रा मन्दिरद्वारं प्राप्य परिसमाप्ता। शोभायात्राया अग्रे उत्तमोत्तमप्रजातिजन्येष्वश्वेषु विराजमानाः वीरपुरुषास्तत्पश्चाद् गणपतिविग्रहा भक्तिच्छेदैः प्रसाधिताननाः सुसज्जिता गजराजाः, तदनु शिरसि पूर्णमङ्गलकलशं संधृत्य वस्त्रालङ्कारभूषिताः सौभाग्यवत्यो योषितः, ततः परं मङ्गलध्वनिं कुर्वाणा वादका, अथ च सा समलङ्कृता शिबिका, यस्यां विराजते स्म श्रीयुगलविहारी। तां शिबिकां स्कन्धमारोप्य प्रचलन्ति स्म रक्तोष्णीषाः पीताम्बरधारिणश्चत्वारो नरयानवाहाः धृतमुष्टिदण्डाः। शिबिकामुभयतः चामरधारिण्यौ कन्यके वलयशिञ्जारवकारिकरेण वीजयन्त्यौ श्रीयुगलविहारिणम्। शिबिकामनु भेरीपटहमृदङ्गादिवाद्यानि वादयन्तो निपुणा वादका, लास्यताण्डवं क्रियमाणा नर्तकमण्डली, अन्ते च भक्तानुरागिणां जनसमुदायः। पदे-पदे कन्यकाः सौभाग्यवत्यो नार्यः लाजानवकिरन्ति स्म, श्रद्धालवः पुष्पवर्षाः कुर्वन्ति स्म।

तत्र मन्दिरपरिसरे प्रातःकालादेव सानेयिकावादनस्य मङ्गलध्वनिः प्रसरति स्म। शोभायात्रायास्तत्र स्वागतं शङ्खघण्टानादैः वेदमन्त्रोच्चारणैः स्त्रीणां मङ्गलगीतैरभवत्। महता समारम्भेण माङ्गलिकानुष्ठानेन सह विशिष्टातिथिः सोऽपि महाजनो मन्दिरद्वारस्थं विनायकं सम्पूज्य देहलीदेवतां प्रणम्य मन्दिरं च परिक्राम्य द्वारकपाटावुद्घाटितवान्। ततः सा शिबिका नरयानवाहैरमन्दा-नन्दनन्दितैरालिन्दमानीता। समुपस्थितजनसमुदाये हर्षनिर्भरो महान् जयघोषोऽभूत्- "हाथी घोड़ा पालकी। जय कन्हैयालाल की।" इति। तत्रत्यः समस्त एव परिवेश आनन्दोत्साहोल्लासमय आसीत्। श्रेष्ठिवर्यः क्रियाविधिज्ञैः पुरोहितैर्निर्दिष्टः श्रीयुगलविहारिणो रत्नद्युतिभास्वरं विग्रहं परमश्रद्धया भक्तिभावप्लुतेन मनसा सर्वात्मसमर्पितहृदयेन शिबिकातोऽवतार्य गर्भगृहे नीत्वा वेदिकायां संस्थापिते सिंहासने सादरं सविनयं सश्रद्धं प्रतिष्ठापितवान्। तदानीमासीत्काचिदचिन्त्या विच्छित्तिः, किमप्यद्भुतं सौन्दर्यं तस्य गर्भगृहस्य। अदीप्तदीपेऽपि श्रीयुगलविहारिणः छबिभासा तत्र सर्वं विभाति स्म। तत्र ये जना आसन् ते क्वचिद् भक्तिः, क्वचिच्छ्रद्धा, क्वचिदानन्दः, क्वचिद्हर्षः, क्वचिदुत्साहः क्वचिदुल्लास एव विधृत्य पाञ्चभौतिकं शरीरमवस्थिता इति प्रतिभान्ति स्म।

अथारब्धं प्राणप्रतिष्ठानुष्ठानम्। वेदेषु, शास्त्रेषु निबन्धपद्धतिषु च

ये ये विधयो यथा यथा निर्दिष्टास्तत्सर्वं पुराणसम्मतं परम्पराप्रसिद्धमनवद्यं पूज्यपूजाप्रवीणैः व्यवहारज्ञैः प्रयोगप्रयतैर्नियतैर्हितमहितैः पुण्यसहितैर्लोभरहितैः प्रतीक्ष्यैः पण्डितैर्यथाक्रमं कारितम्। नीराजनाभिः सह तदनुष्ठानमङ्गलं सम्पन्नम्। ततश्च सम्पूजितं काञ्चनच्छत्रकेतनं शिखराग्रे पूर्वभूस्वामिना सामन्तेन स्थापितं तेन च सह पवनवेल्लच्चीनांशुकपीतपताका पिनद्धा। प्राचीरभित्तिषु तु सर्वत्र दण्डेषु वैजयन्त्यः समीरणेरिता विराजन्ते स्म।

श्रीयुगलविहारिणे निवेदितानां फलमिष्टान्नादिभोगानां प्रसादरूपेण वितरणं कर्मचारिभिः पण्डितैश्च सह स्वयं श्रेष्ठिवर्यो, महाजनः सामन्तश्च परमप्रेम्णा भक्तिभावेन कृतवन्तः। प्रसादं विना न कश्चिदवशिष्टः स्यादिति सयत्नं पुनः पुनरपि पृष्ट्वा सर्वेभ्यः प्रसादो दीयते स्म। श्रद्धालवः स्वयमपि सचेष्टं सश्रद्धं प्रसादं गृह्णन्तिस्म। श्रीयुगलविहारिणो दर्शनेन प्रसादेन च जना मनुष्यजन्मग्रहणस्य सार्थकतां पुण्यमयीञ्च धन्यतां मन्यन्ते स्म। ततो मध्याह्नवेलातः समारब्धो बृहद्भोजो रात्रेः प्रथमप्रहरपर्यन्तं प्राचलत्। सर्ववर्गवर्णजना भोजनप्रसादमुपभुज्य परितुष्टाः प्रीताश्च। भुक्ताः साधवः संन्यासिनो ब्राह्मणाः श्रमणाश्च वस्त्रद्रव्यदक्षिणादानेनाऽपि सत्कृताः।

अस्तङ्गते सति भगवति सवितरि, विगलिते सति प्रतीचीनभोलालिमा-रागे, निशामुखे, प्रस्फुटितेषु नभोद्याने जातिलताप्रसूनतारकप्रकरेषु, प्रदोषकाले श्रीराधामाधवमन्दिरं तच्चाशेषः परिसरः चम्पककुड्मलनिभैः प्रज्वलितघृत-दीपवर्तिकानिकरैः प्रद्योतितालोकस्नात इव विभाति स्म। तदानीं तन्मन्दिरं वसुधातलमायातं स्वर्गखण्डमिव, कान्तिमत्सञ्जीवनीयुतो द्रोणाचल इव, धनपतिनाऽऽनीय स्थापितो भास्वररत्ननिचय इव, मघोनो विद्युल्लतासंवलितः कामरूपो मेघ इव तन्नगरे कृतावस्थानः, बलिबन्धनोद्यतस्य त्रिविक्रमस्य विष्णोर्देदीप्यमानमौलिमुकुटमिव, पार्वतीपरिणयप्रगतपशुपतिचन्द्रोद्भासितजटा-कलाप इव, लक्ष्मीविलासभवनमिव सर्वजनहृदयावर्जकं नयनानन्दकरं ललास। जना दर्शं दर्शं तन्मानसोल्लासवर्षमलब्धनेत्रनिर्वाणां मनस्तृप्तिं न जग्मुः। जनाः कदाचिच्छ्रीयुगलविहारिणोऽलौकिकरूपसम्पत्तिं, कदाचित्तृणीकृत-सकलसौन्दर्यजातं तन्मन्दिरं, कदाचिच्छिल्पकलावैलक्षण्यं, वास्तुनिर्मितिं, कदाचित्तज्जीर्णोद्यानभूमेर्भाग्यलक्ष्मीं, कदाचित्तन्नगरवासिनां पुण्यप्रकर्षं, कदाचित्का-लस्य महिमानं, कदाचिच्छ्रेष्ठिवर्यस्य भक्तिभावयुतमैश्वर्यौदार्यं कदाचिच्च

तद्धनस्य कृतार्थतां विमृश्य विस्मयसागरे निमज्जन्ति मोदन्ते च। सुवर्णे सुगन्धिरिव श्रीयुगलविहारिणः प्रसादनार्थं जनानां च मनःप्रसाधनार्थं तस्यां रात्रौ तत्र महाकविजयदेवकृतं श्रीगीतगोविन्दं ससङ्गीतमभिनीतम्।

तत आरभ्य तस्मिन् राधामाधवमन्दिरे पूजार्चनदर्शनमतिरिच्य नित्यमेव श्रीमद्भागवतपुराणपारायणं, धर्मप्रवचनमन्यानि च माङ्गलिकानुष्ठानानि शुभोदर्कमयानि निरन्तरं प्रचलन्ति। अधुनाऽपि तद्दिव्यमन्दिरं श्रेष्ठिवर्यस्य भाग्यलक्ष्मीं सुविशदां च कीर्तिं दिशि दिशि वितनोति।।

**सेवितुं यो हि जानाति नरो धर्मपरायणः।**
**निर्लोभः संयमी धीरः सर्वात्मना स वर्धते।।१।।**

**अद्भुतार्था मया प्रोक्ता सैषा दीर्घकथा नवा।**
**विस्मयो नात्र कर्तव्यो भाग्यं फलति सर्वदा।।२।।**

**यः पठेच्छृणुयाद् वापि कथामेतां सुकल्पिताम्।**
**सर्वं दातुं सदा तस्मै भाग्यलक्ष्मीः प्रसीदति।।३।।**

●

## कन्यादर्शनम्

"अये दामोदर! किं विचारयसि? अपि कन्या पितृगृह एव वृद्धत्वं यास्यति?"

"नहि मातुल! भवानपि किमपि साहाय्यं न विदधाति। किं करोमि? अहर्निशं तामेव चिन्तयामि। एकैव कन्या, साऽपि मन्दभाग्या प्रतीयते। भवान् जानात्येव भगवत्कृपया किमप्यधिकमेव दातुं मे सङ्कल्पः। किन्तु आतुरो वैद्यप्रार्थीव यत्रापि गच्छामि, तत्र कोऽपि प्रत्यवायः समापतत्येव। क्वचिद् गोत्रैक्यम्, क्वचिन्नाड्या अभिन्नत्वम्, क्वचिद्गुणानां न्यूनत्वम्, क्वचिन्मङ्गलत्वं क्वचिच्च राहुदोषः। दैवोऽपि दूषयति मेलापकम्। अहो, प्रगता अपि कुण्डलीकुण्डलिनीपरिवेष्टिताः विवशा इव नेत्रे निमील्य तिष्ठन्ति।"

"मैवम्, अहमपि चिन्तां भजे। सा चिरञ्जीविनी ह्यचिरादेव सुयोग्यं वरं प्राप्य सौभाग्यवती भविता। कासाञ्चित्कन्यकानां भाग्यं विलम्बेन फलति।"

"दैव एव सहायः। यदा सा स्नातककक्षायामाऽऽसीत्तत एव प्रारभ्य प्रयतमानोऽस्मि। इदानीन्तु सा परास्नातककक्षामुत्तीर्य गृहं सेवते।"

"अशोच्या नन्वियं कन्या। अस्या जन्माङ्गचक्रं जीवनवृत्तञ्च देहि। ईश्वरः सर्वं शुभं विधास्यति।"

कन्यकानां विवाहसम्बन्धस्थापनेऽनिमन्त्रिता अपि नैकाः बाधाः समायान्ति। सन्ति गृहे-गृहे कन्यकाः। कन्याप्रसूत्या मातृकुक्षिः पूता भवतीति लोकमान्यता तथापि जनाः कन्याजन्म न कामयन्ते। कन्याप्रसववार्तयैव

प्रायेण समेषां मुखानि म्लानानि विच्छायपराणि च भवन्ति। सन्त्यङ्गुलिगण्याः केचनैव ये कन्यां जातां लक्ष्मीमिवाभिनन्दन्ति। दामोदरस्यापि गृहे तादृश एवोत्सव आसीत्तस्मिन् दिने यस्मिन् दिन इयं कन्या धरित्रीं स्पृष्टवती। परमप्रीतः पितामहस्त्वस्याः नाम 'मुदिता' इति कृतवान्। अस्याः पद्मदल इव नयने वीक्ष्य पितामही 'पद्मा' इत्याकारितवती। यस्मै यद्रोचते स तदेव नाम कर्तुं समीहते। परन्तु मुख्यतया गृहे 'पद्मा' विद्यालयाभिलेखे 'मुदिता' भवति स्माऽस्या अभिख्या। अतः परं कतिपयैरेव वर्षान्तरालैः मुदिताया अनुजो भ्राता वंशसन्ततितन्तोरनुच्छेदकरो जातः। तत इयं कुटुम्बे सुलक्षणेति प्रतिष्ठिता। स्नेहात्परिवर्धमाना मञ्जुभाषिणी वीणेवाङ्कादङ्कं सञ्चरन्ती सुकेशाऽविदितक्लेशलेशा कनकावदातवर्णा गृहदीपिकेव सर्वमालोकयन्ती प्रासादे प्रसादमानयन्ती समेषां वात्सल्यप्रीतिविवर्धिनी अमृतरसनिष्यन्दिनीव सर्वान् स्नपयन्ती सुपूरकर्पूराञ्जनशलाकेव बान्धवानां नेत्रनिर्वाणसुखमुत्पादयन्ती यादृशीयं रूपशोभासम्पन्ना गुणशीलवती तादृशी एव बुद्धिवैभवाढ्याऽऽसीत्। गृह एवाक्षरपरिचयं कृत्वा पत्रलेखनयोग्यतां प्राप्नोतु, रामचरितमानसादिग्रन्थान् वाचयतु इत्येवालं कन्यकानां कृते इति कुलमर्यादापरिपालनपक्षपातिनां कुटुम्बिजनानां कन्याशिक्षाविषयिणी विचारपरम्परा वृद्धवृद्धोपयोजिता ग्रामे-ग्रामे विलसति स्म। किन्तु वर्तमानजीवनपद्धतिं कालसरणिं च बहुधा विविच्य दामोदरः पुत्रीं मुदितां विद्यालयं प्रेषितुं सङ्कल्पितवान्। पितुर्मनोभावं विज्ञाय शिक्षाप्राप्तेराशया मुदिता प्रमुदिता जाता। शनैश्शनैश्चान्द्रमसी कलेव नित्यं वर्धमाना सा समुचितां शिक्षामपि पुपोष। गृहे गृहकर्मदीक्षां विद्यालये चोच्चशिक्षां समनन्तरमेव साऽवाप। एवं हि, 'अल्पे वयसि गुणाः प्ररूढे वयसि विद्या' इति लोकोक्तिः तस्यां चरितार्थतां गता।

एकदा दामोदरः क्वचित्सूचनामुपलभ्य समीपवर्त्युपनगरे वरं द्रष्टुं गतवान्। तत्र दैवस्यानुग्रहाद्, विधेर्विधानस्य भावित्वान्माध्यमकस्य कौशलाद् वेत्यस्मिन् प्रसङ्गे सर्वमनुकूलं यथेभीप्सितञ्च समपद्यत्। सान्ध्यकाले गृहं निवर्तिते सति तस्मिन् तस्य जाया प्रसादसदनं वदनं विलोक्य साफल्यमनुमीय, 'अपि किञ्चिदपूर्वमाशातीतं घटितम्?'' इत्यपृच्छत्।

''अथ किम्!'' दामोदरः सोल्लासं सस्मितं प्रत्युवाच- ''सर्वमभीष्टं सिद्धम्। केवलं वरपक्षीयैर्जनैः कन्यादर्शनमवशिष्यते। अरी पद्माजननि!

बालक: (वर:) तु सहस्रेष्वेक:। ममैव भाग्यात् स तस्मिन् काल एव गृहमागतवान् यदाऽहमपि तत्र प्राप्तवान्। माध्यमकेनेङ्गितोऽहं तस्य पितरमनुरुध्य तमाहूय सम्यग् निर्वर्ण्य तेन सह वार्तालापमप्यकुर्वम्। सुयोग्य: सुशिक्षित: सुशील: सौम्यश्च स मे प्रतिभाति। तमवलोक्य तञ्चालाप्य मे मन: प्रसीदति स्म। सम्बन्धस्तु तेनैव विधात्रा पूर्वमेव नियतो भवति। केवलमस्माभिस्तस्यान्वेषणं क्रियते। अस्तु, सम्पन्ने सति कन्यादर्शने विवाहलग्नं साधयिष्यामि। मन्ये, पद्माया निरवद्यतां निभाल्य ते स्वयमेव तां वधूं कर्तुं लुब्धा भविष्यन्ति।''

कक्षान्तरैककोणे तरलकनकयष्टिकेव निभृतं स्थिता पद्मा पितृसंवादं कर्णाभ्यां निपीयमाना धरातलादुत्क्षिप्य नाकलोकं नीयमानेव, हर्षोत्फुल्ल-कमनीयकायेन नन्दनवनप्रविष्टेव, आनन्दभरनिमीलितनयनाभ्यां कमपि मधुरं स्वप्नं विलोकयन्तीव, मानसोल्लासपक्षाभ्यां वियत्युत्प्लुत्य गन्धर्वलोके विहरन्तीव, स्निग्धघनगर्जनं निशम्य मयूरीव नृत्यन्ती, नभसो सुधाधारासारै-र्निर्भरक्लिन्ना दोलोत्सवमारचयन्तीव, विकचकलिकोपेता माधवीलतेव सान्द्रमञ्जरी-सौरभसहकारमालिङ्गन्तीव, पीयूषरससागरे निमज्य धवलधवलं मुक्ताफलं विचिन्वतीव, क्वचित्कल्पनाराज्ये कलितमन्मथवेषेण प्रत्यङ्गसन्नद्धलोभनीय-यौवनेन केनचिद्राजकुमारेण दत्तहस्ता रत्नखचितस्वर्ण-सिंहासनमधिरोहन्तीव सा स्वयमपि न जानाति किं किं विचारयन्ती कियत्कालं तथैव स्थिता यावत्तस्या जननी तां नाकारयति स्म।

"इयमहमागताऽस्मी''त्युक्त्वा, तदा न किमपि श्रुतं विदितं वेति रहस्यगोपनाकृतिं विधाय सा मातरमुपससर्प।

"वत्से! पश्य श्रान्तं पितरम्। अस्मै स्वल्पाहारं स्वादु च कदुष्णं चायपेयमुपाहर।'' तथेत्युक्त्वा सा महानसे त्वरितपदा पदं विधाय तत्सर्वं सम्पाद्य पित्रे समुपहृतवती। पिता तु महता वात्सल्येन तां स्निग्धं वीक्ष्य कातर: सजलनयनोऽभूत्।

अथापरेद्युरेकां निपुणिकां प्रसाधिकां गृह एवाहूय पद्मा निसर्गसौन्दर्य-संवलिताऽपि सुरुचिरं प्रसाधिता। अलका आननं कररुहा इत्येतत्सर्वं तत्तद्द्रव्यैर्य-थोचितविधिना चारुतरं समलङ्कृतम्। सुकोमलचरणौ राजीवरागेण, विद्रुमाधरौ पाटलरागेण रञ्जितौ। करपल्लवावपि मेन्धिकापङ्केन रुचिरभक्तिचित्रैरारचितौ। प्रसाधनेनाऽनेन काचिद्वनलता सर्वोपमासम्पद्विभूषिता गृहोपवनं समानीतेव

पद्मा पद्ममुखी पद्मनयना पद्मेव शुशुभे। सर्वं जानन्ती अपि सा मातरं सव्रीडमपृच्छत्- "मातः! एतत्सर्वं किमर्थम्?"

माता तु सहजस्नेहेन तस्याः शिरः समुपजिघ्र्य मधुरं प्रबोधितवती— "वत्से! महता सुपुण्येन सौभाग्येनैवैतद्दिनं सम्प्राप्तम्। आवेदय मे मनोरथान्। निवेदय पित्रोरभिलषितानि। प्रसीदतु सौभाग्यदेवता। अचिरादेव वरकुटुम्बिनो जनाः विवाहहेतुना त्वां द्रष्टुं पार्वतीमन्दिरं समायान्ति। तत्रैवास्माभिर्गन्तव्यम्। अतः परं त्वमपि चिन्तय करणीयम्। गृहदेवता सर्वं शुभं विधास्यति।"

पार्वतीमन्दिरं तु नातिदूरमासीत्। मोटरयानेन सह कुटुम्बिजनैः पद्मा स्वल्पीयसैव कालेन तत्र सम्प्राप्ता।

इतो वरपक्षे कन्यादर्शनस्य प्रथा पूर्वं नासीत्। वरस्य पिताऽन्ये च मान्याः कुटुम्बिजनाः द्वयोरपि ज्येष्ठपुत्रयोर्विवाहे कन्यादर्शनं न कृतवन्तः। परिणामतो माध्यमकवचोविश्वासतस्ते प्रवञ्चिताः। वरपितुस्त्रयः पुत्राः सन्ति। प्रथमो ज्येष्ठोऽभियन्ता, द्वितीयो मध्यमोऽधिवक्ता, अन्तिमस्तृतीयो विश्वविद्यालये प्रवक्ता। ज्येष्ठपुत्रस्य भार्या सुकन्याऽपि पृष्ठास्थिविकारादीषदानमितेन कायेन चलति। विवाहकाले मण्डपमायान्तीं तथाभूतां तां दृष्ट्वाऽपि वरपक्षीया जनाः, 'लज्जावशादियं सङ्कुचिताङ्गी पदं धत्ते' इति विमृष्टवन्तः। एवमेव मध्यमपुत्रस्य पत्नी गुणगणगौरवमण्डिताऽपि तिर्यग्दक्षिणविलोचना तदानीमवगुण्ठनवशान्नाऽऽलक्षिता। इयं तृतीयाऽपि मा भूयात्तादृशीति विचार्य वरपक्षतः कन्यादर्शनं प्रस्तावितम्। अधुना तद्विषये प्रवञ्चनं न स्यादिति कन्या त्ववश्यमेवावलोकनीया। अतः सर्वात्मना सज्जीभूय वरेण सह तस्य पितरौ, द्वावपि भ्रातरौ, भ्रातृजाये, एका च भगिनी- एते सर्वे कन्यादर्शनोत्कमानसाः पार्वतीमन्दिरं गतवन्तः।

प्रस्थानोपक्रमे वरमातरं विहाय तिसृणामपि स्त्रीणां भूषासज्जा त्ववर्णनीया। एका चूडापाशं विरचितवती, अपरा वेणीं ग्रथितवती, इतरा तु स्कन्धदेशे विमुक्तकेशा केशिनीव प्रतीयते स्म। वध्वौ शाटीपरिपाटीं स्वीकुर्वतः कन्या तु 'सूट-'परिधानं परिधापितवती। यस्याः पार्श्वे यानि-यानि स्वर्णरजतादिमयान्याभूषणान्यासन् तानि सर्वाणि तेषु तेष्वङ्गेषु सुनिपुणं चारुतया विन्यस्य पृथगिव स्वीयां प्रतीतिं कारयितुं देहस्य स्थौल्यमविगणय्य 'स्मार्ट' इति भावस्य लौल्येन परिगृहीता स्वं स्वं शरीरं तथाविधं प्रदर्शयितुं

प्रयत्नपरा आसन्। कन्यां सुनिपुणं निरीक्ष्य कः सम्मतिस्वीकृतिनिर्णयः करिष्यतीति विचारपद्धतिमारुरोह। अन्ततः सर्वेषां परामर्शतो निर्णेतुं वर एवास्मिन्नधिकृतः।

अत्र पार्वतीमन्दिराजिरे प्रायेणैतादृशमायोजनं भवत्येव। अवकाशदिवसेष्वथवा शुभपर्वलग्नेषु दिवसपर्यन्तं सम्मेलनं जायते। दूराद्दूरतरादपि वरकन्ययोरुभयपक्षीया जना अत्र समवेता भवन्ति। तत्र कन्यापक्षतो वरपक्षजनानामवसरोचितं प्रियमातिथ्यं क्रियते। अस्मिन्नपि कन्यादर्शनप्रसङ्गे एवमेवाभवत्। वरपक्षीया जनाः पूर्वमेवागत्य देवदर्शनविधिं विधाय मन्दिरस्येशानकोणस्थ आलिन्दे कृतावस्थाना आसन्। कन्यापक्षीया जना अपि तत्र गत्वा तेनैव विधिना मन्दिरस्यापरपार्श्वे समुपाविशन्। प्रथमं तावदुभयपक्षीयैर्जनैः कृतः स्वल्पाहारेण प्रणयः। एतदुदरप्रसादनकर्म सुरुचितया परिसमाप्य प्रकृतमनुसर्तव्यमिति सम्प्रधार्य कन्यकया सह तन्नारीमण्डलं शनैश्शनैर्वरपक्षतः समागतं नारीवृन्दमुपससर्प। लज्जयाऽवनताङ्गी कोमलाङ्गशरीरिणी सा कन्या वस्त्रालङ्कारैर्भूषिता प्रसाधिता तत्र गमनेऽरुचिमिव दर्शयन्ती, पदे-पदे स्खलन्ती, मनसि न जाने किं किं विचारयन्ती, पाशबद्धा मृगीव, यज्ञमण्डपे यूपं प्रति नीयमानाऽजेव, परहस्ते दीयमाना प्रग्रहबद्धा गौरिव, सञ्चारिणी स्तबकभारनम्रा लतेव कथं कथमपि तत्र गत्वा यथानिर्दिष्टमाचरन्ती तस्थौ। गृहीतोच्चशिक्षाऽपि सा कुलमर्यादामनुपालयन्ती, परम्परां निर्वहन्ती क्रीडनकपुत्तलिकेव प्रसाधिताऽऽशिरसः पादपर्यन्तं कौशेयशाटिकाऽऽवृता ईषदिवावगुण्ठनवती वरपक्षमहिलामण्डलसुवर्णाङ्गुलीयके मध्यमणिरिव शुशुभे। उभयपक्षीयाः पुरुषाः किञ्चिद्दूरं स्थित्वा परस्परं वार्तालापं कुर्वन्ति स्म। इतस्तु नारीणां मण्डलेऽपि हास-परिहासक्रमः प्रारभत्। इयं तपस्विनी तु सर्वं शृण्वन्ती अपि बधिरमूकेव मौनमालम्ब्य स्थिता केवलं सौभाग्यदेवतां स्मरति स्म।

वरोऽप्यासीदुत्कमनाः कन्यामुखं साक्षात्कर्तुम्। यद्यपि बाह्यतः स वार्तालापलग्न आसीत् किन्तु मध्ये-मध्ये ईषद्ग्रीवावलनेन चक्षुकोणतस्तां तथाभूतां पश्यत्येव। तदानीं तस्याऽसीन्मनसि- 'स्त्रियः प्रकृत्यैव वाचाला भवन्ति। करणीयं विहाय कथं वार्तारसमास्वादयन्त्यः पुनरपि वार्तामङ्गदपुच्छनिभामग्रेसारयन्ति। मन्ये, 'का भवति त्वरा?' इति ताः नैव जानन्ति।

सुनिपुणं क्षिप्रकारित्वं तु स्त्रीणां स्वभाव एव नास्ति। भवतु नाम, सा कन्या किं विचारयिष्यति? हे महेश्वर! हे जगदम्बिके मातः! भवेन्नाम सा सुमुखी सुरूपा मधुरभाषिणी प्रियंवदाऽनवद्याङ्गी सुलोचना। भगवति! साधयतु मतिमासाम्। कार्यसिद्धये त्वरयन्तु ताः।'

एतस्मिन्नेवान्तरे, वरस्य पिता तत्र गत्वाऽपृच्छत्- "किं रे! कृतं कन्यादर्शनम्?" एवं प्रबोधिताः स्वप्नाज्जागृता इव समस्तास्ताः कन्यादर्शनाय सन्नद्धा अभवन्। वरस्य सा भगिनी चमत्कृता विद्युदिव सहसोत्प्लुत्य गतेव कन्यामुपसृत्य तस्या मुखादवगुण्ठनमपसारितवती। "अहो! निष्कलङ्को मुखचन्द्रः। सद्यःशकलीकृतकरिरदनपाण्डुरकान्तौ कपोलौ, शुकशावकचञ्चुनासिका, बिम्बाफलाधरौष्ठौ, नीलकमलपद्मदलाक्षिणी, सघनश्यामचिकुरचयमध्ये विराजमाना नभोमण्डले आकाशगङ्गेव सीमन्तरेखा, भालोऽपि दीप्तिमांल्लक्ष्मी-विलासलीलारङ्ग इवे"ति दक्षिणकराङ्गुष्ठेन चिबुकमुन्नमय्य सकिलकितं सा प्रोवाच। सङ्कोचलज्जया पद्मायाः नेत्रे स्वत एव निमीलिते। वरस्य मध्यमा भ्रातृजाया तां नेत्रे समुन्मीलितुं किमपि मनसि कृत्वा सत्वरमभिहितवती। पुनश्च जननीनिर्देशाच्छनैश्शनैरुन्निद्रमाने नीलोत्पल इव, राजीव इव, पुण्डरीक इव तया नेत्रे उन्मीलिते। विलोचने च भीतचकितहरिणीवेतस्ततो व्यापारिते। ततो भाविनी श्वश्रूरपृच्छत्- "वत्से! का नामधेयाऽसि?" मात्रा प्रणोदिता सा मन्दमधुरेण स्वरेण स्पष्टाक्षरैरुवाच- "गृहे बान्धववचनेषु पद्मा, क्षिक्षाभिलेखेषु च मुदिते"ति। अतः परं क्रम आसीद् वरस्य ज्येष्ठाया भ्रातृजायायाः। सा पद्मां निर्दिष्टवती- "उत्तिष्ठतु। उत्थाय गत्वा चानयतु ततः प्रपायाः जलम्।" पद्माया जननी जातां प्रबोधितवती- "वत्से! सङ्कोचं विहाय त्वया कुलवधूयोग्यता प्रदर्शनीया। परीक्ष्याऽसीदानीम्। अतो नान्यथा मन्तव्यम्।" ततः पद्मा सलज्जमिव पात्रमादाय स्वाभाविकगत्याऽऽप्रपं गत्वा जलमानीय भाविन्या ज्येष्ठायाः करेऽकरोत्। एवं वरपक्षीयेण नारीवृन्देन सा पद्मा नाम्नी कन्या कायेन, वचनेन, चलनेन च निपुणं परीक्षिता। बाह्यतो नैको दोष आविष्कृतः। मुखानां भावास्तासां नारीणां सन्तुष्टिं सङ्केतयन्ति स्म।

नारीणामिङ्गिताकारैः समाश्वस्तः कन्यापिता दामोदरस्ततोऽधिकतर-मुल्लसित इव भाविनं समधीं निवेदयामास- "बन्धो! सन्तुष्टाः खलु प्रतीयन्ते स्त्रियो भवत्पक्षस्य। अतः परं यदि कुमारोऽपि कन्यां किमपि

प्रष्टुमीहते तदस्माभिरनुमन्यम्। द्वयोरप्येकसूत्रता जीवनव्यापिनी दृढतमा भविता। अतोऽत्र कश्चित्सङ्कोचो नैव कार्यः। वरस्य पिताऽपि स्मिताननोऽवादीत्- "अधुना सर्वमनुकूलमनुष्ठितम्। दैवः शुभः सहायः। द्वयोः परस्परं वार्तालापे नास्ति काचिदापत्तिः। ममाप्यस्मिन्ननुमोदनम्।" पुनः पुत्रमाहूय- "एहि, वत्स! अपि वाञ्छसि पद्मां किमपि प्रष्टुम्? पश्येमां वनलतामिव निसर्गकमनीयां कन्याम्। इयं मे पुत्रवधूर्भवितेति मनो मे मोदते।" पद्माऽपि पित्रा सङ्केतिता मनसा व्यवस्थिताऽभूत्। द्वावपि सलज्जं ससङ्कोचं कियद्दूरं गत्वा एकस्मिन् शिलाखण्डे समुपविश्य किमपि किमपि मन्दमन्दं सस्मितमक्रमेण जल्पतः।

तत्र तदानीं द्वयोरपि पक्षयोरासीन्मोदप्रमोदवार्ताकुतूहलः। क्वचिद्हास-निर्भरं संस्मरणं क्वचित्परिहासवचोवैचित्र्यं प्रचलति स्म। अस्मिन्नेव समयेऽचिरादेव मन्दिरप्राङ्गणे प्रविष्ट एको वयःप्रौढो जनस्तन्मण्डलमुपेत्य कुशलक्षेमवार्तामपृच्छद् दामोदरम्। रूक्षवदनो मलिनरदनो मूर्ध्नि शबलकेशसदनो नीलकनीनिकानयनः शुष्कताम्बूलरागरञ्जिताधरो वार्ताक्रमे हास्यपरोऽचिन्त्यशङ्कितानुभावः स तात्कालिकमुपक्रमं विज्ञाय सहसैव वरपितरमुन्मुखो भूत्वा व्यभाषत्- "सम्यग् विज्ञायैव सम्बन्धः स्थिरीक्रियते?" वरपितोवाच- "अथ किम्?" "कोऽस्ति माध्यमकः?" "नहि कश्चित्। किन्त्वधुना भवानेव।" "यद्यहं माध्यमकः स्वीकृतः, तच्छ्रूयताम्- कन्यकेयमुदरं बिभर्ति"- इत्युक्त्वा समन्ततः साकूतं साभिप्रायं दृष्टिपातं विधाय तस्थौ। तस्येदं वचः सर्वेषां कर्णकुहरेषु तप्तायसद्रवमिव प्रविष्टम्। सुखसम्भावनाशिखरोऽशनिप्रहारेण विध्वस्त इवं, हरिता वनाली सझम्पं तडित्पातेन दग्धेव, मुदिता मृगाली दृप्तसिंहस्य कर्कशगर्जनभीषणरवेण छिन्नेव, पुष्पोद्यानं भीषणवात्यावेगेन प्रभग्नमिव, मृत्तिकाभवनभित्तिः धारासारवर्षेण गलिता विलुप्तेव, दिशो निबिडतिमिराऽऽच्छन्ना इव। दामोदरस्तु- "हा दैवहतक! किं कृतं त्वया? अनेन नरपिशाचेन दुर्मुखेन मिथ्यैव लाञ्छिता मेऽनघा कन्या।" सर्वेषामाननानि विषवचसाऽनेन म्लानानि विवर्णानि। कः कं किं ब्रूयात्। परस्परं समक्षं द्रष्टुमपि न कस्यचित्साहसः। वरस्य पिता तु दामोदरं पापमूलं ज्वलच्चक्षुषा निर्दहन्निवाऽवोचत्- "भवति छद्मवञ्चनाया अपि काचित्सीमा। ममैव शिरसि धूर्तध्वाङ्क्ष इव पुरीषमोचनं कर्तुं यतसे? अयं महाशयः कालेन दैवप्रेषितोऽत्र समायातो येन मदीया मर्यादा कलङ्कपङ्कनिमज्जनाद्रक्षिताऽन्यथा त्वया तु मे मुखं कालुष्यरञ्जितमेव।" दामोदरस्त्ववाग् जडीभूतः स्थाणुरिव स्थितो

यथाकथञ्चिच्चेतनां धारयामास। क्षणात्पूर्वं द्वयोः पक्षयोर्या प्रीतिर्दृढतरा जायते स्म सा सहसाऽतर्क्यरूपेण ह्यकारणमेव जलबुद्बुदवत् प्रणष्टा। वरपक्षनेत्रेषु वह्निज्वालाः कन्यापक्षनेत्रेषु जलधाराः विडम्बनाया विकरालतां स्पष्टमेव द्योतयन्ति स्म। स पुरुषस्तु किञ्चिद् हसन्निव स्थितः सर्वान् पश्यति स्म।

त्वरितपदा पद्माजननी पुत्रीं तामुपसृत्य करेणाऽऽकृष्यैकतो नीत्वा तस्या उदरं परामृष्टवती। "अलं नाटकितेने"त्युक्त्वा संतर्ज्य वरस्य पिता पुत्रमुच्चैराकार्य, "प्रचलन्तु सर्वे" इति निर्दिदेश। सोऽपि पुरुषो 'विडम्बितं गभीरवितंडितमि'ति मनसा विमृश्य वरस्य पितुः सम्मुखं गत्वा बाहू प्रसार्य, "अरे समधीः! कथं रोषावेशविवशो भवसी"ति तर्जयित्वा पुनः सस्मितं सादरं प्रोवाच- "मातुलोऽहं कन्यायाः। दामोदरो मामुपेक्ष्य माङ्गलिकं कर्मेदमनुयोजयतीति तस्मै दण्डस्तु देय एवेति मया कल्पितमलीकवचोरचनया। भवन्तः सर्वे गृहीतोच्चशिक्षाः सामाजिकाः सभ्याः समर्जितप्रतिष्ठा इति मया पूर्वमेव श्रुतमस्ति। किन्त्वद्यात्रानुभूतं यदनेन तु निरक्षरा मूर्खा एव वरम्। अरे, परिहासविजल्पितमपि मे वचो भवद्भिः परमार्थेन गृहीतम्। धिगस्त्वविवेकधियम्। किमुक्तं मया? 'कन्येयमुदरं बिभर्तीत्येव नु!' हन्त! कोऽर्थोऽस्या उक्तेः? उदरं तु सर्वे प्राणिनो धारयन्ति। तत्र को विशेषः? मम कथनस्याऽयमभिप्रायो यदियं महता स्नेहेन लालिता पालिता। आशैशवादेव दुग्धघृतादिकं सुरसव्यञ्जनममृतस्वादूनि फलमूलानि सम्पन्नं रुचिरं चात्मप्रियमाहारं सेवते। भवतां गृहे सर्वमेतत्सौविध्यमस्याः कृते करणीयमिति ममाशयः। किमहं मूढो विक्षिप्तः प्रमत्तो वा यत्स्वभगिनीपुत्र्या जीवनं नरकं विधास्यामि? किं वा, तप्तोदकेन नवमालिकां सेत्स्यामि? क्षम्यतां क्षम्यतां मे परिहासाऽपराधः। त्यज्यतां मनःकषायितम्। एतदासीत्केवलं कौतुकं नान्यत्। कन्यादानं कन्याग्रहणं च पुण्यतमं कर्म। मानवजीवने सम्पद्यमानो महान् विशिष्टश्च यज्ञः। कन्या नदीव कुलद्वयं कूलद्वयवत् पुनाति। सा तु सेतुबन्धतां याति द्वयोरपि कुटुम्बयोः प्रीतिमानसोल्लासस्य। कन्या यस्य कस्याऽपि भवेत् सा पूता गौरिव पूज्या माननीया। सा भाविनी मातृशक्तिर्भवति। अनिन्द्यायां कन्यायां मिथ्यादोषमुत्पाद्य को नाम पापकृन्नरकगामी भवेत्? मदीयेयं भागिनेया पद्मा तु सुशीला गुणखनिः सहस्रेष्वेका। धन्यं तद्गृहं यत्रेयं यास्यति। प्रशमन्तु पापाः पुण्यानि च समुदयं यान्तु। अहमत्रभवतां समेषां मनःप्रसादं प्रार्थये।"

शुष्कप्राये केदारखण्डे वृष्टिरिव निजश्यालकस्य वचनं निशाम्य दामोदरस्त्वपगतगदोल्लाघलघुरभवत् हृदयञ्च तस्य समाश्वस्तम्। वरस्य पिताऽपि तत्त्वमवबुद्ध्य निर्भरं जहास कन्यामातुलं चालिङ्गनबद्धं चकार। कन्यापक्षस्य कण्ठगताः प्राणाः पुनरपि समायाताः। सर्वे यथावस्थं बभूवुः। तद्युगलमपि नन्दनवनोल्लसितं जातम्।।

**विवाहो जीवनोत्कर्षः संस्कारः प्रयतो महान्।**
**प्रजायै ह्युत्तमो धर्मः समाजस्य नियामकः।।**
**कस्मै नेयेति कन्या सा लक्ष्मीरूपा गृहे गृहे।**
**भवत्येव सदा लोके न्यासभूता तपस्विनी।।**
**अधुना प्राग्विवाहात्तु कन्या दृश्या वरार्थिनी।**
**वरेणाऽपि वरं द्रष्टुमितीहा लोकसंश्रया।।**
**निर्दोषदर्शना कन्येत्युक्तं पूर्वैः सुधीवरैः।**
**किन्तु दोषान् समाहर्तुं कन्या दीनाऽवलोक्यते।।**
**यः पठेच्छृणुयाद्वापि प्रीतिदात्रीं कथामिमाम्।**
**अचिरं मुच्यते सोऽपि कन्यादर्शनकिल्बिषात्।।**

●

# कनकलोचनः

नियतिकृतनिष्ठुरनिशितनियमनियमिते निसर्गपरम्परानिर्वाहविवशे विचित्रेऽस्मिन् संसारे सन्त्येव केचन कीचकरन्ध्रायमाणाः वातेरिता इव स्वेच्छाचारिणः कुत्सितकर्मकारिणः, करालव्याल इव निर्मोकधारिणः, मृगमरीचिकेव चित्तापहारिणः कपटसाधवो मानवदानवाः। प्रकटतया ते समाजे आदर्शभूता इवाऽऽत्मानो धारयन्ति। लोके सद्वेषा अपि सद्वेषा यशोभाजः प्रतिष्ठिता महामान्येषु गण्यन्ते। प्रतीयन्ते खलु पयोमुखाश्चिक्कणघटाः किन्तु भवन्ति विषमयाः कटा एव। भौतिकचाकचिक्यं विहाय तेभ्यो नान्यत्किञ्चित्प्रतिभाति। वाममार्गिणस्ते नैव जानन्ति दाक्षिण्यम्। मनसि वचसि काये न तेषां वसति कारुण्यम्। स्वार्थपूर्तिरेव तेषां मनःस्फूर्तिः। स्वार्थान्धास्ते न गणयन्ति गुरुजनान्, न रक्षन्ति सम्बन्धान्, नालोचयन्ति भूतं, नालोकयन्ति भविष्यं, केवलं पादलग्नकर्दमा इव दूषयन्ति वर्तमानम्। तेषां चलनं, वचनं, हसनं, लपनं, वलनं, किं बहुना, आहारो व्यवहारश्च सर्वमेव स्वार्थमूलम्। ते परेषां सुखं खादन्ति, परेषामेवाश्रूणि पिबन्ति। परेषामेवोदरे तेषां पादन्यासो धने च नेत्रविन्यासो भवति। आत्मोन्नत्या प्रसीदन्ति सीदन्ति चापरेषामुत्कर्षेण। कलहबीजान्युप्त्वा ते कृषिं कुर्वन्ति, सततेर्ष्याजलधारया तां सिञ्चन्ति, विघ्नविकटकण्टककटकैस्तां परिरक्षन्ति, द्वेषमात्सर्योर्वरकैस्तामभिवर्धयन्ति, पुष्पितां तां दृष्ट्वा नन्दन्ति फलञ्च सामोदमास्वादयन्ति। निशीथगहनतमोनिवह एव तेषां चक्षुः स्फुरति, सूर्यरश्मयस्तु तानुद्वेजयन्ति। विडालवृत्तिवर्तमानास्ते सन्ति कुशलकौशिकाः। यथा कश्चिदसामाजिकोऽपि कुशीलवान् सामाजिकानां

मध्ये स्थितः कुशीलवान् प्रयोगनिरतान् प्रेक्षते तथैव तेऽपि समाजे विहरन्तो विहरन्ति सज्जनप्राणान् विषमरणप्रयोगैः।

एवमेव मदीये ग्रामे वसत्येको दृश्यतया साधुतोज्ज्वलकूटमधिरूढः कूटकर्मनिपुणश्छलप्रपञ्चविशारदो विषरदः। नास्ति स निरक्षरो मूढधीरथवा निसर्गग्राम्योऽपितु साक्षरो राक्षसः। स तु सुशिक्षितः सभ्यसमाजस्यैको विशिष्टो जीवः सेवानिवृत्तः शासनाधिकारी। शासकीयसेवायां स यत्रकुत्रापि नियुक्तः स्थानान्तरितो भूत्वा गतो वा, तत्र-तत्र पदाधिकारचेष्टाभिः सदैव तथाऽऽचरति यथा तत्पदं लाञ्छितं भवति स्म। तस्य कदाचारस्य नैकाः कथाः तेषु तेषु क्षेत्रेषु अद्यापि जनानां जिह्वातः कर्णमायान्ति किन्तु नियोजनस्य सुदूरत्वात् जन्मभूमिभूते ग्रामे तु न कथञ्चित्कदापि सम्प्राप्ताः। अतोऽत्रत्याः जनाः तस्य नाम सगर्वं सादरञ्चोच्चारयन्ति। अद्याप्यत्र सा प्रतिष्ठा तस्य तथैव वर्तते।

निजो ग्रामो ग्रामजीवनञ्च तस्मै भृशं रोचते। प्रतिवर्षं स एकाधिकं वारं सावकाशः सन्नवश्यमेवायाति स्म स्वग्रामम्। पैतृकं गृहं भूमिमुद्यानञ्च निभालयति। तेषां संरक्षणं सुव्यवस्थां च विधाय निवर्तते स्म। सेवाकालस्यावधौ तेनोपार्जितां प्रचुरां धनसम्पत्तिं तस्य कुटुम्बिनोऽन्ये च जनाः ये निकटस्थास्ते सम्यग् जानन्ति किन्तु तस्य केनापि कृत्येन सा नैव प्रकाशिता। यथा तद्वर्गीया वेतनभोगिनो जीवनं यापयन्ति स्तरञ्च साधयन्ति तथैव सोऽपि लोकचक्षूरजःक्षेपणाय कयाचित्कृपणतया व्यवहरति स्म।

सेवानिवृत्तिकाले तस्य भार्या राजधान्यामथवा कस्मिंश्चिच्छोभने नगरे सुवसतिं कालवनीं वा विशोध्य समुचितं 'फ्लैट' इति भवनं हितरमणं क्रेतुं प्रणोदितवती किन्तु तेन सा सम्यक् प्रबोध्य समाश्वस्ता- "प्रिये, त्वं जानास्येव, नगरं मह्यं न रोचते। अनुदिनं वर्धमानया जनसंख्यया नगराणि जनसम्मर्दभराणि कंक्रीटवनानि जायमानानि सन्ति। न तत्र निर्मलं जलं नापि पूतः पवनः। सर्वत्रैवावस्करचयो दृश्यते। राजमार्गा अन्तर्वीथयश्च दुर्दशाग्रस्ताः। एवं नगरस्याशेषं पर्यावरणं दूषितं स्वास्थ्यहानिकरञ्च। अत्र स्वकीयेऽपि गृहे निवसन् नानाप्रकारकाः कराः, यथा- गृहकरो भूमिकरो जलकरः सीवरकरो विकासकर इत्यादयो देया एव।

पश्याऽपरतो ग्रामम्। तत्र स्वीया भूमिः स्वीयञ्च भवनम्। निर्मलं

सुरुचिरं स्वास्थ्यकरं च भवति पर्यावरणम्। जलं वायुः दुग्धमन्नफलशाकादीनि सर्वाण्यद्यापि नगरापेक्षया विशुद्धतराणि विलसन्ति ग्रामे। ग्रामस्य हरितः परिवेशो न केवलं नयनानन्दकरोऽपितु शान्ततरो राजते। तत्र वासेन पैतृकसम्पत्तेः संरक्षणं संवर्धनं च भविष्यति। नगरे तु मदीयाऽभिख्या सागरे बिन्दुरिव, सुमहत्यन्नराशौ क्षुद्रसर्षप इव किन्तु स्वीये ग्रामे मरुस्थले वटवृक्ष इव भविता। सामाजिकसम्बन्धानपि द्रढयितुं ग्रामवासश्श्रेयः। वर्तमानकालेऽपि ग्रामजीवनमनवद्यं भाति। तत्र प्रतिवेशिनः प्रतिवेशिनो भवन्ति। नगरे तु 'फ्लैट'-संस्कृतौ कोऽधस्तले कश्चोपरि वसतीत्यपि न ज्ञायते। परिणते वयसि वानप्रस्थस्थाने भवतु नाम ग्रामवास एव। यत्सौविध्यं नगरे परिकल्प्य जना अन्धानुकारेण नगरं प्रति पलायमानाः दृश्यन्ते, तत्सर्वं सौविध्यमहं तुभ्यं ग्राम एव दास्यामि। यान्यपि सुखकराणि भौतिकसाधनानि तानि सर्वाणि तत्र त्वां सेविष्यन्ते। त्वं तत्र ग्रामे तथैव श्रद्धेया, पूज्या मान्या वा भविष्यसि यथा निरस्तपादपे देशे एरण्डः।'' एवमन्यैरपि विविधैर्वचोभिस्तां प्रबोध्याऽयं शासनाधिकारी सेवानिवृत्तः पश्चाद् ग्रामे गृहबुद्धिं बबन्ध।

अथ सर्वसौविध्यभरं भवनं स्वग्रामे निर्माय स भार्यया सह सुखं निवसति। तयोरेक एवापत्यो राजकुमारो नाम पुत्रः स्वदेशाद्बहिः कस्मिंश्चिद् वैदेशिके प्रथितशिक्षासंस्थाने पठति। तस्यायं जनकोऽत्र ग्रामे सुमेरुशिखरमधिरूढः पदप्रतिष्ठागर्वितोऽहङ्कारनिगूढः 'कोऽन्योऽस्ति सदृशो मया' इति दुर्भाववासनया कमपि तृणाय न मन्यते। ऐश्वर्योपकृतः स यदि कमपि ससुखं रोटिकामश्नन्तं पश्यति सुदुःसहेर्ष्यासन्तापतापमनुभवति। स कदापि नासीदुदारहृदयः। स निर्धनानसहायान्निर्बलानपि प्रसह्य वञ्चितुं प्रयतते न च सहते कस्यचिद्विकासोन्मुखं जीवनम्। तस्य जिह्मजिह्वा न कञ्चिद् ब्रूते शुभम्। पुरा यस्यागमनेन ग्रामवासिनः हर्षनिर्भरमानसाः प्रसादसदनवदना आसन्, तेऽधुना तद्दुर्व्यवहारतो भृशं खिन्ना अवसन्नाश्च सन्ति।

अध्ययनं समाप्य विदेशात्प्रत्यावर्तिते सति पुत्रे महानुत्सव आयोजितस्तेन। स्वकीयां सम्पद्विभूतिं प्रदर्शितुं तेन मुक्तहस्तेन व्ययः कृतः। ततोऽचिरादेवाल्पीयसा प्रयासेन भारतसर्वकारस्यैकस्मिन् महनीये प्रतिष्ठाने राजकुमार उच्चाधिकारिपदमलङ्कृतवान्। पुत्रं सुसमीहितपदमधिष्ठितं दृष्ट्वा पितुर्भालो गर्वेण समुन्नतो वक्षश्च स्वायतं बभूव। ततः परं तस्याऽहङ्कारप्रेतस्तं

प्रगाढतरं निगडितवान्।

पुत्रस्याध्ययनकाल एव बहवो विवाहसम्बन्धप्रस्तावाः समायान्ति स्म। परन्तु, "पुत्रोऽध्ययनावधौ विवाहार्थं मतिं न करोती"त्युक्त्वा प्रायस्ते सर्वे निरस्ता भवन्ति स्म। अधुना ततोऽप्यधिकाः प्रस्तावाः प्राप्यन्तेऽनुदिनम्। वरस्तु सदैव दुर्लभः किन्त्वेतादृशः सुयोग्यो वरः कुत्र लभते- इति मत्वा जनास्तमुपयान्ति स्वकन्यायाः पाणिं ग्राहयितुम्। 'कन्या वरयते रूपं माता वित्तं पिता कुलम्' इति सूक्तिरिदानीं विलोमपर्यायतः प्रचलति- 'वरः कामयते रूपं वित्तं जनको वधूं जनी'ति। "कः श्रेष्ठोऽस्मिन् संसारे?" "वरस्य पिता।" आगतेषु कन्यापक्षजनेषु स वरपिता नानाख्यानकानि बहुधा निरूप्य कमपि ब्रवीति- "सत्यं खलु नास्ति मे कन्यापितृत्वं किन्तु कन्यापितुः दुःखमनुभवामि।" कमपि ब्रूते- "सम्बन्धस्तु पूर्वनियत ईश्वराधीनः। वयं तु निमित्तमात्राणि।" अन्यं प्रबोधयति- "वरकन्ययोर्योग्यत्वं भवानेव निभालयतु, यदि समुचितं ततो नास्ति मे निषेधः।" अपरं सम्बोधयति- "भगवत्कृपया नास्ति मे कश्चिदभावः। तथापि पालनीया कुलपरम्परा रक्षणीया खलु सामाजिकी प्रतिष्ठा। पश्यतु, मम श्वसुरेण स्वकन्यायै एकपञ्चाशत्तौलकः स्वर्णभारः प्रदत्तः। अतः परं भवानेव प्रमाणम्।" एतत्सर्वं ब्रुवतस्तस्य दृष्टिः सर्वथा यौतुके स्वर्णसम्भारे भवति स्म। कन्याऽपि कनकावदाता रूपगुणशीलवती भवेत्। एवमेवाऽर्घनिर्धारणव्यापारः प्रायेण वर्षपर्यन्तं प्राचलत्। सम्बन्धविषये नैराश्यंगतैः कैश्चित्कन्यापक्षीयैस्तस्मै 'कनकलोचन' इत्यभिख्या ख्यापिता। अन्ततः शतं तौलकं स्वर्णभारं प्रदाय तादृशेनैव केनचित्कन्याजनकेन स्वकन्यायाः पाणिपीडनं राजकुमारेण वरेण सह कृतम्।

अधुनातनेषु विवाहेषु संस्कारविधेः कथा तु दूरमपास्ता। तत्र केवलं भौतिकाडम्बरैस्सह वैभवप्रदर्शनमेव वरीवर्ति। एतत्सर्वमस्मिन् विवाहोत्सवे बभूव। द्वयोरपि पक्षयोर्वृद्धातिवृद्धा जनाः नानुस्मरन्ति स्वकीये जीवने एतादृशीमद्वितीयां शोभाढ्यां वरयात्रामथवा भव्यातिभव्यं वैवाहिकं समारोहम्। सर्वमप्यदृष्टपूर्वमश्रुतपूर्वमनास्वादितपूर्वमासीत्। धन्यधन्या सा कन्या परिणीता पितृगृहात् श्वसुरालयं सदुःखसुखं समानीता। लज्जया सङ्कुचितां नताङ्गीमवगुण्ठनवतीं तां कुलवधूं कौतुकागारे प्रवेश्य तां दर्शं दर्शं श्वश्रूरम्याश्च ग्रामस्त्रियः- "पद्मवदनेयं स्वर्गादवतीर्णा काचित्सौभाग्यलक्ष्मीरि"ति प्रशशंसुः। लोकपरम्परा-

नुसारं कतिपयैरेवाऽहोभिः सा मातृगृहं गता। तत्र श्वसुरस्य सन्देशो गतः- "वधूः हीरकहारोपकण्ठिता प्रेषणीये"ति। सन्देशव्यथितेन कन्याजनकेन कृतामेतत्सम्बधिनीं कामप्यभ्यर्थनां प्रति कनकलोचनो मनागपि कर्णं न दत्तवान्। विवशो दीनार्तः कन्यापिता ऋणं कृत्वा तस्यादेशमपालयत्। एवं यदा यदा वधूः स्वपितृगृहं याति तदा तदा किमपि नूतनं स्वर्णाभूषणमानेतव्यमिति दिशति श्वसुरः। त्रस्तः कन्यापिता ततः सम्बन्धमेव विच्छेत्तुमियेष। स कन्यां नैव प्रेषयामास। व्यतीते बहुकाले राजकुमारः स्वयमेव श्वसुरालयं गत्वा पत्नीं सादरं सस्नेहं प्रीतिपुरस्सरमानीतवान्। अपि च, स्वकेन सह तां नेतुं पितरौ प्रार्थितवान्। किन्तु स कनकलोचनः, "वत्स! तत्र ते सेवकाः सन्त्येव। अत्रावयोः सेवां को विधास्यति? अत इयमत्राऽवाभ्यां सह ग्राम एव तिष्ठतु" इति प्रबोध्य पुत्रमेकाकिनमेव प्राहिणोत्।

एकदा जनैः श्रुतं- "कनकलोचनस्य वधूः महानसे रन्धनकर्मणि व्यापृता एल०पी०जी० वर्तुलपात्रविस्फोटतोऽग्निना दग्धा दिवङ्गता। शोकमयेऽपि तस्मिन् विषमकाले कनकलोचनः पुत्रं सान्त्वयामास- "अचिन्तिताः खलु सहसैव निपतन्ति विपत्तयः। वत्स, दुर्ज्ञेयं खलु विधेर्विधानम्। यद्भाव्यं तद्भवत्येव। अचिरमेव ततोऽप्यधिकतरां सुयोग्यां सुन्दरीं कन्यां कनकशतभारेण सह प्राप्स्यसी"ति।"

**कथायां निहितं तत्त्वं सम्बुध्य मनसा नरः।**<br>
**यदि लोभं त्यजेत्तत्तु भवेत्तस्य शुभावहम्।।१।।**<br>
**एको नास्ति समाजे हि कश्चित्कनकलोचनः।**<br>
**दृश्यन्ते बहवस्तत्र क्रूराः कनकलोचनाः।।२।।**<br>
**यः शृणुयात्पठेद्वापि भावपूर्णां कथामिमाम्।**<br>
**स दुस्तरं तरत्याशु सागरं तप्तकाञ्चनम्।।३।।**

●

## गोपालः

कदाचित्कस्यचिन्नगरविद्यालयस्य छात्राः शैक्षणिकयात्रायां गतास्तत्र पर्यावरणविज्ञानज्ञानाय शिक्षकैः संयोजिताः कस्मिंश्चित्पर्वतनदीजलाशयाढ्ये वनप्रान्ते तच्छोभां निरीक्षमाणा इतस्ततो भ्रमन्ति स्म। प्रकृतेः सुरम्यं स्वरूपं दर्शं दर्शं तेषां मानसं निर्भरं निरर्गलञ्चोल्लसति स्म। सुपुष्पभारनम्राणां तरुणतरतरूणां कोमलकिसलयकमनीयशाखाग्रेषु विचित्रवयसामवलोकनं कलकूजनश्रवणं च तेषां नेत्रेषु चमत्कृतिं श्रोत्रेषु च मधुधारामनुभावयति स्म। पर्याप्तव्याप्तकुसुमस्तबकप्रसाधितासु लतापादपवीथिकासु सुशीतलां गन्धमादनीं छायामाश्रित्याधस्तात्पतितविस्तीर्णे परागधूलिसंवलिते पुष्पपटले शनैः-शनैः सुखदं सञ्चरणं नवोऽनुभव आसीत्। हरितकेशानां कठिनकलेवराणामपि भूधराणां सरसं हृदयमिवादाय निःसृतानां स्वच्छन्दोच्छलानां सवेगं पततां मनोऽभिरामाणां निर्झराणां हिमशीकरैः क्लिन्नगात्राश्छात्राः पद्मगन्धसम्पृक्तैर्वनदेवतायाः श्वासनिभैस्तनुस्वनैः पवनैः सुसेवितास्ते परां निर्वृतिं जग्मुः। शब्दमात्रेणोद्वेजितानां मुग्धमृगशावकयूथानां सहसा वियत्युत्प्लवनं सविशेषं चेतोहरणमासीत्। क्वचिल्लाङ्गूलोत्क्षेपानीतफलानां कर्तनं कुर्वन्तः स्वभावचपला वानरास्तैः सकुतूहलमवलोकिताः। एवमेव नवां नवां वनविच्छित्तिं नयनाभिरामामविरामं विलोकयद्भिः स्वशिक्षकान् वनलतापादपजन्तूनां नामानि पृच्छमाणैस्तैः क्षुत्पिपासे अपि विस्मृते। परन्तु सम्प्राप्ते मध्याह्ने 'भोजनवेला समुपस्थिते'ति सहागतैः परिचारकैस्सूचितास्ते सर्वे तत्र विमलोदकं सरो निभाल्य तत्तीरे सघनतरुच्छायायामानीयास्तीर्णे पटच्छदे समुपविष्टा आहारग्रहणाय सन्नद्धा बभूवुः।

एतस्मिन्नन्तरे लघुगोब्रजेन सह सञ्चरमाणो वनतनय इवैको बालको भोजनोत्सुकस्य छात्रसमवायस्य दृष्टिपथे निपतितः। तं तथायान्तं दृष्ट्वा ते सर्वे सोत्कमना नकुलवदुद्ग्रीवाः किञ्चिदपूर्वं विचित्रं वस्तु दृष्टमिति निःस्तब्धं निर्निमेषलोचनैरापीयमाना इव तस्थुः। गोब्रजानुसारी स बालको यावच्छात्रसम-वायान्नाधिकं दूरं सरस्तीरं प्रति समायाति तावद्गावः समुच्छ्रितकर्णपुच्छाः समुद्वेजिता अलक्षिताः। गोब्रजस्येमां दशामनुभूय सोऽपि बालश्चकित इव समुत्सुकनेत्रान् तान् छात्रानपश्यत्। के ते सन्तीति नानुमीयमानोऽपि दूरतः समानवस्त्रवेषभूषान् समवयोरूपान् कुमारान् दृष्ट्वा प्रसादितान्तःकरणः स त्वरितमनुसृत्य पलायनपरं गोब्रजं समाश्वास्य जलपानाय नोदितवान्। ललितकलितवलितग्रीवा गावो यथेच्छं जलं निपीय परावर्तिताः। पीतोदकाः गावः कियद्दूरं नीत्वा स बालकः पीतस्कन्धवृक्षमूले स्थापयामास। सुखमासीनास्ता यदा रोमन्थमाणा निमीलितनयनाः सञ्जातास्तदाऽयमपि गृहादानीताहारप्रणयाय यत्नपरोऽभूत्।

तं तथाभूतमवलोक्य तेष्वेकश्छात्रः स्वीयमेकं शिक्षकं निवेदितवान् तमाकारयितुं छात्रैश्च सह भोजनं कारयितुम्। वार्तापटुः स शिक्षकस्तमुपसृत्य सस्नेहमामन्त्र्य छात्रानुपानीतवान्। लगुडहस्तः स प्रसन्नवदनो निसर्गसरलो नयनतरलो व्योममण्डलादवतीर्ण इव, संसारसागरादुत्तीर्ण इव, विन्ध्यपादे विशीर्ण इव, जगत्प्रपञ्चाद् व्याकीर्ण इव समवायसमक्षमवस्थितः सविस्मयं छात्रमण्डलमपश्यत्। शिरसि बभ्रुवर्णोष्णीषं ततश्च शेषं शरीरं विहायैकमधोवस्त्रं जीर्णामिव धौतिकां जानुवेष्टितां धारयन्, उपानद्योगानभिज्ञं पादयुगलं किञ्चिदाकुञ्च्याऽपरिचयात्सङ्कोचवशाल्लज्जानताननस्तस्थौ। गोचारणप्रसङ्गे निरन्तरं वृष्ट्यातपपवनसन्निधिवशात् श्यामतामालिङ्गति तनुताम्रवर्णा तनुः। तत्रोदरं द्विधा विभाज्यमाना राजते तनीयसी श्यामला रोमराजिः। प्रायेण द्वादशवर्ष-देशीयोऽयं कुमारस्तत्र पुष्टमांसलगात्रः समेषां कुतूहलपात्रमासीत्। तमुपस्थितः स छात्रस्तस्मै स्वागतं व्याजहार तथा चापृच्छत्तस्य नाम किन्तु स मौनमेवाभजत। कृतेष्वपि बहुविधेषु प्रश्नेषु शान्ताकृतेस्तब्ध्याधरौष्ठयोः केवलं स्मितविस्तृति-माप्नोति।

ततश्च स छात्रो यदृच्छया तस्मै 'गोपाल' इति संज्ञां प्रदाय हस्तेन प्रगृह्य प्रोवाच- "एहि गोपाल, अस्माभिः सह भोजनं कुरु। वयं वयस्याः

नगरादत्रागता: शोभां चास्य कान्तारखण्डस्य निरीक्ष्य भृशं मुग्धा:। अपि त्वं नित्यमेवात्र गाश्चारयसि?'' गोपाल: केवलं स्वीकृतौ शिरश्चालयामास। स पुनरप्यपृच्छत्- ''पठनाय विद्यालयं न गच्छसि?'' प्रश्नमिमं श्रुत्वा गोपाल: प्रथमवारं निर्भरं जहास। तस्य कुन्दद्युतिदन्तच्छबिहसितविलसितं वदनं वीक्ष्य सर्वेषां मनस्यायातम्- 'आदौ केवलं स्मितं ततो हासोऽतो वाग्विलासो भविष्यति।'

''भवतु, वार्तालापं पश्चात्करिष्याव:, प्रथमं तु भोजन''मित्युक्त्वा स छात्रो गोपालं स्वपार्श्वे समुपवेश्य तस्मै भोजनं प्रायच्छत्। अन्ये सर्वे छात्रा: भोजनं कर्तुमारब्धवन्त: किन्तु गोपाल: स्वपुटकस्था: रोटिका: गोभ्यो वितीर्य तत आगत्याचमनं विधाय, ग्रासमेकं भगवते निवेद्य प्रसन्नमनसा स्वोदरपूजां कृतवान्। सम्पन्ने सत्याहारे सरस्तीरं गत्वा गौरिव मुखमानमय्य जलं पीतवान्। तस्यायं जलपानविधिश्छात्रेभ्यो विस्मयावहोऽभूत्। ततश्च प्रतिनिवृत्त्य सुस्वादुभोजनार्पणाय सर्वान् प्रति प्रणतिं विधाय गोब्रजान्तिकं गत्वैकस्मिन् प्रस्तरप्रस्तारे पादौ प्रसार्य शयनमुद्रां बबन्ध।

तन्मुखाद् वार्ताशब्दश्रवणलालसोऽनालस: स छात्रो गोपालस्यान्तिकं गत्वा मैत्रीभावं प्रदर्शयन् तस्य विश्वासमुत्पाद्य तद्विषये पृष्टवान्। 'अयं नागरश्छात्रो मां ग्राम्यं मूर्खं च मानयित्वाऽत्रोपहसितुमागतो न वेति' संशयदोलाधिरूढ: स बालको, 'भवतु नाम, किमनेने'ति विचिन्त्याब्रवीत्- ''बन्धो! नाहं पठामि न च जानामि विद्यालयम्। अत: किञ्चिद् दूरं वर्तत एका ग्रामटिका यत्रैकस्यां गोमयपङ्कलिप्तवंशखण्डनिर्मितायां पर्णच्छन्नकुट्यां जनन्या सह वसामि। तत्र सन्ति मम कानिचिन्मित्राणि यै: सह सायंकाले क्रीडामि। इमा गाव एवावयोर्जीविकाया: साधनम्। रात्रौ चन्द्रताराङ्कितं नभ: पश्यामि दिने च रवेरालोके सर्वत्र विततं पर्यावरणम्। इयमेव मदीया जीवनचर्या। अतो नाधिकं किमपि जानामि। अद्य भवद्भि: सह नागरं सुस्वादु भोजनं कृतमिति ततोऽधिकम्।'' एतच्छ्रुत्वा परं प्रीत: स छात्र: प्रियसखममुमापृच्छ्य सहपाठिभि: सह यथाऽऽगतस्तथैव स्वविद्यालयं ततश्च स्वगृहमाजगाम।

राघवो नाम स छात्रो नगरस्य विश्रुते विद्यालये नवमकक्षायां पठति। तस्य पिता प्रदेशशासनसेवायामुच्चाधिकारिपदमलङ्करोति। प्राप्तोच्चशिक्षा

सुरुचिसम्पन्ना माता गृहकर्मतोऽवशिष्टे काले कदाचित्स्ववसतावेव समाजसेवां करोति। राघवस्यैकाऽनुजा'ऽनुजै'व नाम्नी पञ्चमकक्षायाश्छात्रा कुटुम्बिजनानां स्नेहैकपात्रमस्ति। अधिकारी पिता सदाचारी कुशलप्रशासको, माता सद्गृहिणी वात्सल्यमूर्तिः परोपकारहृदया, भ्रातृभगिन्यौ चाध्ययनपरायणे मेधाविन्यौ प्रीतिप्रतीतिविग्रहे स्तः। दिष्ट्यानुदिनमेतेषां वर्धते सुखम्। तस्मिन् दिने सायन्तने काले गृहमागत्य राघवः शैक्षिकयात्राया वृत्तान्तं श्रावयामास। यदा स गोपालनामानं तं ग्रामकुमारमवर्णयत् तदा सर्वेऽत्यन्तं समुत्सुकाः कुतूहलेन विस्फारितनेत्राः प्रत्यक्षमिव तमवलोकयन्तः साश्चर्यं सर्वं श्रुतवन्तः। अनुजा तु भोजनान्ते तस्य जलपानविधिं निशम्य भृशं हसितवती।

"शैक्षिकयात्रोपलब्धिः का?"-पृष्टे सत्येवं पित्रा, राघवः सप्रश्रयमुवाच- "तात! यद्यपि प्रथमवारमेव मनोहरं वनं दृष्टं किन्तु ममोपलब्धिस्तु गोपाल एव। स मम सखेति मनसा स्वीकृतम्। निवेदयामि तत्कृते किमपि सविशेषं कर्तुम्। कदाचिद् वयं सर्वे तं द्रष्टुं तत्र गच्छेम।"

"कथं कदाचित्? कथन्नु सद्य आपतिते रविवासरे?" विहस्याब्रवीत्तस्य पिता। एतन्निशम्य राघव उल्लसितो बभूव। अपरेद्यू रविवासरस्य पूर्वसन्ध्यायामेव राघवस्य पिता सर्वं यात्राप्रकल्पं साधयामास। स्वकीयं मोटरयानमारुह्य प्रातःकाल एव निर्गतास्ते वनं प्राप्य राघवेन निर्दिष्टे स्थाने सगोब्रजं गोपालं दृष्ट्वा प्रीतिपूर्वकं तमुपसृतवन्तः। राघवस्तं सम्बोध्याकथयत्- "सखे! गोपाल! इमौ मम पितरौ, इयं भगिनी अनुजा। वयं त्वां, तव मातरं ग्रामटिकां च द्रष्टुमागताः। अस्मान् स्वगृहं नय।" साशङ्कोऽपि गोपालो राघवस्यानुरोधं प्रमार्ष्टुं न शशाक। तेन सङ्केतिता गावो गृहं प्रति पलायिताः। अयमपि तैस्सह मोटरयानमारुह्य गृहं प्रति प्रतस्थे। कियद्दूरं गत्वा सुगममार्गाभावात् तत्परित्यज्य ते पदातिनो भूत्वा गोपालमनुसरन्तः ग्रामटिकां गत्वा तस्य गृहद्वारे आसन्।

कथमेता गावो नियतकालात्पूर्वमेवागताः? मम पुत्रस्य किं भूतमित्यनिष्टाशङ्कया सोत्कम्पहृदया गोपालस्य जननी यावद्गृहाद्बहिः पश्यति तावदपरिचितैः सभ्यैः जनैः सहाऽऽयान्तं स्वकं पुत्रं दृष्ट्वा विस्मिता जाता। प्रहर्षितो गोपाल आगत्य मातरं सर्वमावेदितवान्। नागरश्छात्रो राघवो मम पुत्रस्य मित्रमिति दैवं बहुधा समीक्ष्य कार्तज्ञदृष्ट्या निभालयन्ती कूपादानीय

पानीयं सगुडपिण्डमुपहृतवती। गोपालस्तु खट्वां नीत्वा मलिनेनाप्यास्तरणेनाच्छाद्य, 'उपविशन्त्वि'ति निवेदयामास। प्रीतिनिर्भरहृदयस्यातिथ्यमङ्गीकृत्य राघवकुटुम्बं सामोदं गोपालं सनाथीकृतवान्। राघवस्य पित्रा दत्तहस्तो गोपालः कालान्तरे विश्रुतो वेणुवादको बभूव। तेनोपार्जितेन यशसा धनेन चेयं ग्रामटिका साम्प्रतं स्वर्गखण्डमिव चकास्ति॥

**गोपालस्य कथां श्रुत्वा प्रीतिरीतिविवर्धनीम्।**
**कथातत्त्वानुरक्तस्य कस्य मोदो न जायते?॥१॥**
**अनेके सन्ति गोपालाः केचिद्राघवसन्निभाः।**
**लोके भवति सद्भाव एवमेव न संशयः॥२॥**
**करुणा ममता मैत्री वेदना हार्दिकी तथा।**
**जगत्स्वर्गोपमं भूयाद् राघवाः स्युर्गृहे-गृहे॥३॥**

## सन्त्रासः

अन्ततस्तदेव घटितं यस्याऽऽशङ्का सदैव मम मनसः क्वचित्कोणे कृतपदाऽऽसीत्। न जाने कस्य जन्मनः कर्मविपाकात्, आत्मनो दुर्दैवात् कुटुम्बिजनानाञ्च दौर्भाग्यादस्मिन् जन्मनि धृतमानवदेहोऽपि वृत्त्यनुरोधवशान्निशाचरो भूत्वा निर्भ्रमो निर्भयं भ्रमामि। अधुना लोके लोकतन्त्रस्यान्यतमः स्तम्भो यं जनाः 'प्रिण्ट मीडिया' इति कथयन्ति, तस्यैवाङ्गभूतो जनेषु 'पत्रकार' इति प्रतीतः स्वीयं धर्मं चरामि विचरामि च कदाचिज्जानपदेषु ग्रामेषु, कदाचिन्नागरचर्याचर्चितेषु नगरेषु, कदाचिद्विजने वने, कदाचिज्जनसङ्कुलेषु समृद्धापणेषु, कदाचिद्विद्वत्सभासु, कदाचिद्धूर्तमण्डलीषु, कदाचित् स्वर्गशोभाढ्येषु भव्यभवनेषु, कदाचिद् दुःसहदुर्भाग्यदरिद्रीभूतेषु कुटीरेषु, कदाचिद्राजनेतृमण्डलसमवायेषु, कदाचित्सरसपानगोष्ठीषु, कदाचिन्नीरसध्यानयोगविधानवितानेषु यत्र-कुत्रापि जीवनिर्जीवलोकसङ्ग्रहे सहसाऽऽपतितग्रहगृहीत इव लब्धावकाशो लुब्धमधुप इव वार्तालवमपि घ्रातुं किमपि विशिष्टं चित्रं विचित्रं वेति।

सुकठिनं खलु पत्रकारकर्म; स समाजगतं सद्वृत्तं दुर्वृत्तं वा समुद्घाट्य तज्जनहितधिया प्रस्तौति। यः पत्रकारः कदापि केनापि कारणेन न्यायात्पथो न विचलति स एव यथार्थतः पत्रकारः। उपलभ्यमानं वृत्तं याथातथ्यमनुसन्धाय विवेकबुद्ध्या समालोच्य प्रकाशयति। अनेन कर्मणा स न केवलं स्वकीयस्य वार्तापत्रस्य महिमानं प्रथयति, अपितु समाजस्य राष्ट्रस्य च यथोचितां हितानुबन्धिनीं सेवां विदधाति।

शाश्वतिकाः सन्ति लोके दैवीवृत्तिसम्पन्ना आसुरीवृत्तिविपन्नाश्च जनाः। येषां मनोभावा आसुरीवृत्तिसमाक्रान्तास्ते केवलं नैजं स्वार्थं ध्यायन्ति, साधयन्ति च तं केनाप्युपायेन। एतादृशा जना यस्मिन् पात्रे भुञ्जते तदेव छिद्रजर्जरं कुर्वन्ति। ते राष्ट्रभक्तिं विषवल्लरीमिव दूरत एव परित्यजन्ति। देशहितं तेभ्यो वृश्चिकदंश इव प्रतीयते। तेषां बहिर्गतः परिवेषो यादृशीमुज्ज्वलतां बिभर्ति, अन्तःकरणं तदधिकतरमेव कालुष्यराशिं धारयति। आस्ये हास्यसृष्टिं प्रदर्शयन्तोऽपि मनसि प्रलयबीजं पोषयन्ति। कालसर्प इव प्रथमं फूत्कुर्वन्ति ततः सहसैव निभृतं दशन्ति। मातुरुच्चाररूपाणां तेषां नास्त्येव जननी नापि जन्मभूमिः। दिवान्धास्ते न पश्यन्त्यात्मानमपि। मैत्री तेभ्यो विमनायते। करुणा सकरुणं ततोऽपसर्पति। उपकारबीजं तस्मिन् तूषरभूमाविव मनागपि न प्ररोहति। बान्धवजनसम्बन्धो विक्षिप्ततां प्रयाति। काकिणीमप्यवाप्तुं परेषां कोटिदहनं वरं मन्यन्ते। काक इव निरर्थकमेव परेषां हितान् दूषयन्ति। प्रतिलाभं तेषां लोभः सुरसामुखमिव विवृतदंष्ट्रं विवर्धते। अन्येषां श्रीवृद्धिं दर्शं दर्शं तेषां मनांसि भृशं दूयन्ते, अपि चासहमाना ईर्ष्यासन्तापपुटपाकगता इव घोरं तप्यन्ते। तेषां वचनं गरललपनम्। तेषां कथनं कषायक्वथनम्। तेषामुल्लासः कोटिकरालकालविलासः। तेषां हासः दावानलप्रकाशः। वदनं विषादसदनम्। प्रसादो विपत्प्रासादः। सहानुभूतिः लुण्ठनसम्भूतिः। नमनं धनुरिव प्रहाराय। स शनिरप्यशनिः सदाचारस्य, विधानमप्यविधानं सद्विचारस्य। किं बहुना, स तमेवालिङ्गति, तमेव सर्वात्मना स्वीकरोति, तमेव बहु मानयति, तमेव भाषते, तमेव भोजयति, तमेव सत्करोति यस्तं विज्ञाय तादृश एव भवति।

कश्चित्पत्रकार एव जानाति सम्यगनुभवति वा समाजे निरन्तरं वर्धमानं तत्कल्पनातीतमासुरीवृत्तिप्रवृत्तिपरं जनसम्मेलनम्। तेषां जनानां स्वभाव आलक्ष्यत एव प्रकृतिसिद्धो विविधविशिष्टविवृत्तिप्रवृत्तिपक्षपातः। कश्चित्कौशिको दिवान्धो रात्रिचरश्चरति तस्करोपस्करसम्भारेषु। कश्चिच्छ्येनः सहसैवाक्रम्यापहरति प्राणानन्येषाम्। कश्चिद्गृध्रः सुनिबद्धैकदृष्टिः सामिषं सर्वस्वमुदरीकर्तुं प्रयतते। कश्चित्काकः कस्यचिन्मुखात्कराद् वा कवलीकृतमपि रोटिकाखण्डं प्रोल्लुञ्च्य धृष्टतया कटुरावं रौति। कश्चिद्बकः पादैकनिष्ठः श्वेतोऽपि कलुषितान्तःकरणः कपटभक्त इव लक्ष्यानुरक्तो मत्स्यान् झटित्येव प्रहरति कठिनतीक्ष्णचञ्चुग्रहणं गृहीत्वा जीवितानेव तान् निगरति। एवमेवान्येऽपि बहवो दुर्जनाः मिथ्यालापाः

कुटिलकर्मकलापा: पापा: समाजशत्रवोऽपराधिनोऽविदूषका अपि दूषका:, अनधिगतगणपतिशासना अपि मूषका:, अनवाप्तकुशासना अपि कुशासना:, अदृष्टजनतापहारिणोऽपि जनतापहारिण:, जनतापकारिणो जनतापकारिणश्च। लोके जङ्गमकैतवहेतुभूतानां सज्जनचन्द्रग्रहणहेतुकेतुभूतानामेतादृशानां लब्ध-प्रतिष्ठानामुच्चासीनानामपि नीचकर्मनिरतानां छद्मसाधुवेषकञ्चुकानां रहस्यभेदनं सर्वथा तत्प्रकाशनञ्च धर्म एव विहित: पत्रकाराणाम्। अधुना तादृशेषु दुर्जनेषु लोकस्य, ईश्वरस्य, धर्मस्य वा भीतिर्नास्ति किन्तु पत्रकाराणां नाम्नैव ते भीता: भृशं वेपन्ते। अतस्ते पत्रकारान् निजभावभावितान् विधातुमिच्छन्ति। तेभ्य: पुरस्करान् वितरन्ति, विविधोपहारानपि प्रयच्छन्ति। एवं नानाविधै: प्रयत्नैर्वशीकर्तुं तानमिलषन्ति। ये पत्रकारास्तु धाराविपरीतं सत्यधर्ममनुतिष्ठन्ति, तेषां दुर्गतिरस्मिन्नुलूकतन्त्रे लोकतन्त्रे भवितैव। एतत्सर्वं जानन्नपि राष्ट्रहितकामी न्यायमार्गगामी य: पत्रकार: स सदैव स्वधर्मं चरति हित्वा प्राणमोहं सकलसुखसन्दोहञ्च। अहमप्येक: पत्रकार इति आत्मानं गणयामि तथाविध:।

भारतीयलोकतन्त्रस्य विडम्बनैवेयं यदधुनाऽपराधिनो जना: धनजन-बाहुबलिनो राजनीते: प्राङ्गणे यस्य कस्यापि दलस्याङ्गुलिं करे कृत्वा निरङ्कुशा: निर्भयं सञ्चरन्ति। तिक्ताऽऽलाबुका निम्बवृक्षेण सङ्गता। राजनीतिकदलानामाश्रयं प्रगृह्य ते ततोऽप्यधिकतरमनाचारदुराचारभ्रष्टाचार-कदाचारसंवलितमकरणीयमपि करणीयमिति मत्वा यथेच्छं कुर्वन्ति। नैकमपि राजनीतिकदलमस्यापवाद:। लोकसभायां राष्ट्रस्य श्रेष्ठतमायां संसदि, विधानसभासु जनपदनगराणाञ्चान्यास्वपि सभासु समितिषु वा 'माफिया' इति श्वेतवेषधारिणां निर्वाचितानां सदस्यानां संख्या दिनानुदिनं वर्धमाना परिलक्ष्यते। प्रत्यक्षव्यवहारेष्वहर्निशं विधिनियमोल्लङ्घनकर्तार एव तत्र तत्र सदनेष्वधिष्ठिता विधिनियमविधातार: समुपहसन्ति सज्जनान्। हा विधेर्वैपरीत्यम्! हा भारतीयलोकतन्त्रस्य दौर्भाग्यम्!!

आसीदेतादृश एव श्वेतकञ्चुको नराधमो मम दृष्टिप्रसरे। स मां सामान्यवार्तासङ्कलक एव जानाति स्म। गुप्तवार्तान्वेषकोऽप्यहमप्रकटतया सामान्यवृत्तिवर्तनं कुर्वन् तस्मिन् विषये सुगोप्यमपि तथ्यं तस्यापराधजगतो विचिन्वन् सावधानो विचरामि। नासीन्मे काचित्त्वरा। शनै: शनै: निभृतपदै: स्वीयोद्देश्यमुपसर्पामि स्म। अस्य न क्वचित्प्रतीतिर्यतो हि ममानुसन्धान-

पद्धतिरीदृशी आसीत्। नापि च सन्देहलेशो मम विषये। सर्वं सामान्यमिव प्रतिभाति स्म। मृत्कणात्कणं सञ्चीयमानेन वल्मीक उपचीयते। एवमेव कणशः क्षणशश्चैव मया एषोऽखिलोऽपि वृत्तान्तः संकलितः, तं विविधैर्वाप्तप्रमाणैः सुपुष्टं विधाय सञ्चयिका चैका विनिर्मिता। सतत्त्वं तद्गोपनीयं तथ्यं सप्रमाणमस्मद्वार्तापत्रसम्पादकस्य समक्षं समुपस्थापितम्।

"किमि"ति? नेत्रे विस्फार्य स मामपृच्छत्।

"स्वयमेव पश्यतु भवान्" इति मया विज्ञापिते सति स सञ्चयिकां तामुद्घाट्य वारं वारं नेत्रे स्फारं दर्शं दर्शं सविमर्शं पृष्ठात् पृष्ठमुद्घाटयन् समग्रां सामग्रीं समवलोक्य, उपनेत्रं करे कृत्वा, नेत्रे प्रमृज्य साभिप्रायं मम मुखमपश्यत्। ततश्च सञ्चयिकां पुटबन्धे विधाय सविस्मयं सस्मयञ्च प्रोवाच- "अपि नाम त्वयैतत्सर्वमेकाकिनैव कृतम्?" "अथ किम्?" मया प्रमिताक्षरैरुक्तम्।

"एतादृक् सुदुष्करं भयावहं सङ्कटविद्धं कर्म त्वया निभृतं कृतं किन्त्वयं जन ईषदपि न सूचितः। कार्यं परिसमाप्येदानीं सूचयसि। महान् खलु विशङ्कोऽसि।" - स सस्नेहमपि सरोषमुक्तवान्।

पुनरपि मया तथैवोक्तम्- "अत्र विश्वस्तमपि नैव विश्वसेदिति नीतिः। अतः क्षन्तव्योऽयं जनः। दृष्टा भवता सञ्चयिका। अधुना यत्करणीयं तत्क्रियताम्"। सस्मितमपि सधीरं गभीरेण स्वरेण सोऽवोचत्- "अस्य प्रकाशनं न तथा सरलं यथा त्वं विचारयसि। तव साहसः श्रमश्चानिर्वचनीयोऽभिनन्दनीयश्च। किन्तु परिणाममाकलय्यैव किञ्चित्कर्तव्यम्। न हि काचित्क्रिया सहसैव विधातव्या। जानास्येव, बलवद्विरोधिता दुरन्ता भवति। वार्तापत्रस्य प्रबन्धकः स्वामी वाऽस्य प्रकाशनं स्वीकरिष्यति न वेति वक्तुं न पारयामि। तयोः सहमतिं विना किमपि कर्तुं न शक्यते। मन्ये, त्वयाऽनितरसाधारणोत्साहेन साहसेन च स्वप्राणानपि संशयतुलामारोप्यैतत्सुदुष्करं गूढातिगूढं सत्यवृत्तं सङ्कलितं, किन्तु वृत्तान्तस्यास्य प्रकाशनादस्माकं वार्तापत्रस्य किं भविष्यतीत्यपि विचारकोटिमायाति। अस्य प्रकाशनं राष्ट्रस्य, समाजस्य किंवा भारतीयराजनीतेः हितसाधकं स्यात्, वार्तापत्रस्यापि प्रतिष्ठा गरिष्ठा भविष्यति किन्त्वेतन्नैव विस्मर्तव्यं यत्ते प्रतिपक्षिणो रावणं कंसादिकमप्यतिक्रमन्ते। ते कल्पनातीतं प्रतीकारं विधातुमर्हन्ति। अतः सम्यग् विचार्यैव कर्तव्यमस्माभिर्यतो हि ते

शुष्कतृणानीव सहसैव ज्वलिष्यन्ति।"

मया मौनमेव सर्वमेतच्छ्रुतम्। आसीच्च मे मनसि- "सर्वसाधनसम्पन्ना अपि कियन्तो भीरवः सन्त्येते! दृढव्रतेन मया सर्वमेतत् सुसमीक्ष्य, राष्ट्रहितं सर्वोपरि मन्यमानेन प्राणानप्यविगणय्य साधितं खल्वसाध्यम्। मदीयां तादृशीं भावनां तिरस्कृत्वैते वणिग्बुद्ध्या परिणामगणनां गणयन्ति। नावलोकयन्ति सत्याग्रहिणां क्रान्तिकारिणां स्वातन्त्र्यसेनानीनां त्यागमात्मोसर्गं वा। किं तेषां तथाभूतानां नासन् कुटुम्बिनः? किं नासन् तेषां प्राणाः प्रियाः? किन्तु ते सर्वात्मना सर्वमपि पणीकृत्वा स्वाराज्यं लक्ष्यं प्राप्तवन्तः। भवतु नाम, सञ्चयिका तु मया सम्पादकमहाशयाय निवेदिता। यद्येते तथा न कुर्वन्ति, अहन्तु तत्रावश्यमेव मानवचर्मच्छन्नस्य तस्य दानवपशोः राष्ट्रद्रोहपराणि सर्वाण्यपि दुष्कृतानि जनतासमक्षमुद्घाटयिष्यामि। एवं चिन्तामग्नस्य मे पत्रकारस्य दिनद्वयं व्यतीतम्। तृतीयदिवसस्य सूर्योदयस्तु विलक्षणविस्मय-कारिवार्तया सहाभूत्। वार्तापत्रस्य मुखपृष्ठ एव स्थूलाक्षरैः सचित्रं प्रकाशितं तद्दुर्वृत्तं दृष्ट्वा सर्वसाधारणजन इवायं पत्रकारः चमत्कृतचक्षुरपि बाह्योल्लासं कञ्चिन्निगूह्य परां कोटिं मनस्तोषस्य जगाम। दूरस्वनेन कर्तव्यनिष्ठं सम्पादकं प्रति स्वीयं हार्दं कार्तज्ञं व्याजहार। ततश्च प्रसन्नस्यापि तस्यान्तःकरणे वेपथुरजनि- 'अथाग्रे किं भविष्यती'ति।

सञ्जातश्च तस्मिन् दिने सामान्यतो नैकगुणो विक्रयस्तस्य वार्तापत्रस्य। तत्र प्रकाशिता सुदुर्लभा वार्ताऽपि नासीत्सामान्यजनस्य। अद्यावधिपर्यन्तं यं जनं जना देवोपमं मानयन्ति स्म तस्य निगूढं स्वरूपरहस्यमनया वार्तया विज्ञाय तस्मै थूत्कारमददुः। प्रकाशितमिदं वृत्तमचिरमेव न केवलं नगरेऽपि तु देशे-विदेशे, समन्ततो दावानल इव व्याप्नोति स्म। सुरक्षादृष्ट्या प्रशासनेन वार्तापत्रकार्यालयं परितः रक्षिबलं नियुक्तम्। त्वरितविधिना तस्य मानवदानवस्य विरुद्धमुच्चाधिकारप्राप्तगुप्तचरानुसन्धानं नियोजितम्। सततमन्विष्यमाणोऽपि स शशविषाण इव क्व वलुप्त इति विस्मयस्य विषय आसीत्। मन्ये, काराबन्धभयात् स क्वचित्पलायितो भूमिगतो वाऽभूत्।

यथा सर्वत्र भवति तथैवात्रापि सागरस्योत्प्लवनमिव दुर्वृत्तमिदं जनसम्मर्देषु क्रमशः शान्तिमगात्। शासनस्तरेण त्वस्यान्वेषणं, परीक्षणं समीक्षणं प्रचलत्येव। व्यतीते खलु मासकतिपये, एकदा सायंवेलायां जनोऽयं (अहम्) वार्ताप्रत्रकार्यालयात् स्वकीयावासं प्रति समायाति स्म। पत्रकारधर्म

साधु चरित्वा दुःस्वप्नादिव तस्माद्वृत्ताद्विगतचिन्तो बभूव। प्रदोषकाले स मार्गः यत्र-तत्र विजन आसीत्। मार्गे क्वचित्प्रकाशः क्वचिच्चाप्रकाश आसीत्। आदिवसं कार्यव्यापृतिवशाच्छ्रमाधिक्याच्च शिथिलीभूतदेहस्य ह्यस्य मनसि- 'गृहं प्राप्य श्रान्तिशान्तिं लप्स्ये' इति पौनःपुन्येनोदेति स्म। अथेदानीं मा कश्चित्परिचयप्रगल्भो मिलतु। यदि पादौ पक्षसनाथौ भवेतां तदोत्पत्य गृहं प्रति गच्छानि। गृहद्वारे प्राप्ते, द्वारघण्टिकानादं निशम्य प्राप्तसञ्चरणवयो निर्भयो बालतनयो महतोल्लासेन, "आगतास्तातपादा" इति कोकिलकलकूजितं व्याहार्य कपाटमुद्घाटयति। ततः सुतस्य मनःप्रसादाय सोऽहं नित्यमेव किमप्युपायनं तस्मै प्रयच्छामि लालयामि च। गृहाभ्यन्तरं शरासनान्निर्गतो बाण इव गत्वा किलकिततिलकितेन स्वरेण पितुरागमनं सूचयति। एवं पुत्रेण भार्यया च सह सुखमुषित्वा खाद्यपेयमास्वादयन् श्रमविनोदं करोमि। इत्थं विचिन्तयतो मम पार्श्वयोर्द्वे कारयाने सहसैव सवेगमागत्य निर्ध्वनी संस्थिते। अकस्मादेकस्माद्यानाद् विनिःसृत्य द्वौ बलिष्ठौ दर्पकन्दर्पौ युवानौ तडित्-झम्पया पत्रकारपुरुषं मां विधृत्य बाहुभ्यां मुखनासिके च गन्धकर्पटेन विधायैकस्मिन् याने बलान्निक्षिप्य पुनरग्रेसरतः स्म।

अथ निशीथे यदा मूर्च्छाऽपगता, अहमात्मानं क्वचित्प्रस्तरप्रस्तार-शिलाटङ्काकीर्णे सागरतटे पतितं पोट्टलिकाबन्धमिव स्थितमनुभूतवान्। महती खलु पीडा मामापादशिरो दुनोति स्म। शरीरं समग्रमेव रक्ताक्तम्। देहस्य न कश्चिदप्ययवयोऽनाहत आसीत्। शिरोभञ्जनं हस्तपादास्थिपेषणमेवंविधं कृतमासीद् यच्छरीरं केवलं रक्तस्नातं मांसपिण्डमेव प्रतिभाति स्म। मुखात् किञ्चिच्छब्दितु-मथवा पार्श्ववलनमपि विधातुं न शक्नोमि। प्राणाः कथं न निर्गता इतीश्वरेच्छैव बलीयसी। एतस्मिन्नेवान्तरे तत्र नीरवे घनान्धकारे सञ्चरतां जनानां पादध्वनिः श्रवणविवरं प्राविशत्। प्राणान् रक्षितुकामः परमया जिजीविषया श्वसनं समाहृत्य स्तब्धः सन् मृत्पिण्डनिभमात्मानमकुर्वम्। निमिलतयोः नेत्रयोः केवलं चतुर्भुजस्य सुदर्शनधारिणस्तेजस्विस्वरूपमेकतोऽपरतः पुत्रस्य भार्यायाश्च सकरुणं चित्रमायाति याति स्म। अन्यत्किमपि नासीत्। क्रमशः समीपात्समीपतर-मनुभूयमानः स पादध्वनिः कियद्दूरे ह्यवसितः। ततश्च शनैश्शनैरन्तिकमागत्यैकः क्रूरतया पादेन मां प्रहृत्य प्रोवाच- "मन्ये, नरोऽयं नरकं गतः। अतोऽतो गमनं वरम्।" अपरो जगाद्- "पापमेतं सागरे प्रक्षिप्यैव गन्तव्यम्।' एतच्छ्रुत्वाऽहं मृतोऽपि पुनर्मृतः। ततः कर्कशकरौ क्रूरकर्माणौ द्वावपि नीचपुरुषौ मामुत्थाप्य

कन्दुकमिव तोलयन्तं दोलयन्तं क्षुब्धाब्धिं प्रतिनिक्षिप्तवन्तौ। परिणाममनपेक्ष-माणास्तौ हिंस्रमनुजदनुजौ त्वरितपदौ गहने तमसि प्लुतौ विलुप्तौ। अहन्तु निजायुष्यबलात् पूर्वजन्मकृतपुण्यप्रभावाद्वा, सुकृतपरिपाकाद्वा, ईश्वरानुग्रहाद्वा, महाजनाशीर्वादाद् वा, पूज्यपूजापुण्याद्वा, सदाचारफलाद्वा, सहधर्मचारिणी-सौभाग्याद्वा, सुतस्नेहसम्भावनाद्वा, नियतिनियमवशाद्वा न जाने कारणा-त्कस्मादकस्मादगाधसागरतटे प्रलम्बमानस्यैकस्य शङ्क्वाकारस्य पाषाणखण्डस्य मूले निपत्य तस्थौ। यदि मनागपि विचलनं ततः स्यान्न कोऽपि सागरे पतनादवरोद्धुं क्षमो भवेद्रज्जुच्छेदे घटमिव कूपे।

सागरसन्निधौ शीतलवातस्पर्शान्मे भीषणाहतस्य मृतप्रायस्यासहायस्य तपस्विनः पत्रकारस्य चेतना काचित्पुनः स्फूर्तवती। एतादृशो महान् सन्त्रासो मम जीवने प्रथममेवातिनिष्ठुरो दुर्दैवादागतः। सोऽपि स्वधर्मपरिपालननिष्ठा-विपाकात्। यतो हि मम चेतसि झटित्येव स्फुरति स्म यदेतत्क्रूरकर्म निश्चप्रचं तस्यैव श्वेतकञ्चुकिनो माफियासंज्ञितस्य नरपशोरेव। तस्यैवापराधहेला-व्यवसायिनः पण्यजीविनो जना द्रव्यलाभलोभात् किञ्चिदपि कर्तुमुद्यता अनीश्वरवादिनो सङ्केतमात्रेण मां नियम्य यमद्वारं प्रापितवन्तः। लोकहिताय सत्यधर्माय स्वकर्तव्यमाचरता मया सन्त्रासभरं मरणनिभं कष्टमनुभूतम्। जीवनं खलु शरीरस्यानया दुर्दशया नरकायते। हा प्रिये! पत्रकारवराकस्य सहधर्मचारिणि!! कां दशां प्रापिताऽसि? 'अखण्डसौभाग्यवती भवे''ति शुभाशीर्वादानां किम्भूतम्? असत्त्वे सति मयि, जीवनं ते दग्धशुष्कोद्यानमिव भविता। हा पुत्र! वंशाङ्कुर! मां विहाय दीनां स्वकीयां जननीं दुःखसागरनिमग्नां तां कथमुद्धरसि? भगवन् दीनबन्धो! अशरणशरण!! परित्रायस्व; अकालमरणं निवारय। मां विना न मे पत्नी न वापि पुत्रः प्राणान् धारयिष्यतः। तौ क्रूरकर्माणौ हिंस्रनरपशू मां मृतमिति विचार्य परित्यज्य गतौ किन्तु त्वदधीनोऽयं जन इदानीमपि श्वसिति। पिशितपोट्टलिकेवायं कायो दृषद्टङ्केषु कीलितः कस्मिंश्चिदपि क्षणे कवलतामेष्यति कालस्य। भैरवोऽयमगाधसागरः प्रतिक्षणं मामनन्तशयनाय क्रोडे कर्तुं ह्यातुरमना इव प्रतीयते। मुखाच्छब्दकरणेऽपि शक्तिर्नास्ति। किं करोमि? कथमात्मानं रक्षामि? हे महादेव! त्वमेव धारय माम्। सूर्योदयात्प्राक् कोऽपि जीवो ममान्तिकं माऽऽयातु। एवमन्यैरपि नानाविधैः सङ्कल्पविकल्पैः क्षणमेकैकं युगमिवानुभवन् तस्यामेव सन्त्रासकारायां पतितोऽहं तां घोरां निशामनैषम्।

सत्यसंवादिनी सैषा यद्यपि कल्पिता कथा।
समाजे घटते नित्यं लोकवृत्तानुभाविनी।।१।।
बुद्धस्य गान्धिनो देशे देशे च रामकृष्णयोः।
दुष्टानां मर्दनं नैव सतां नैव हि रक्षणम्।।२।।
नैवात्र भारते वर्षे समग्रेऽपि धरातले।
वर्धते विषवृक्षोऽयं हिंसकातङ्कवादिनाम्।।३।।
ये केचित्पत्रकाराः स्युः सत्यान्वेषणतत्पराः।
एतादृशो न सन्त्रासः तेषामुद्येत्कदाचन।।४।।
यः पठेत्सत्कथामेतां संस्कृते प्रभुनिर्मिताम्।
स्वप्नेऽपि तस्य नोदेति भीतिः प्राणविघातिनी।।५।।

●

## वटावतारः

अस्ति वाराणस्या उत्तरदिशि पुण्यसलिलाया गङ्गायास्तटे विशालो वटवृक्षः। जना गङ्गास्नानं कृत्वा तन्मूलाय जलमर्पयन्ति श्रद्धया च वटपरिक्रमामपि कुर्वन्ति। प्रातर्वेलायां वयसां मधुरमधुरैर्विरावैः स वटो गङ्गायाः स्तुतिं कुर्वन्निव स्थितो जटिलो महात्मा प्रतिभाति।

कदाचिदेकदा ब्राह्ममुहूर्ते यदा सकलाघप्रशमने कलिकलुषविध्वंसने विमले सुरसरिज्जलेऽखिलसन्तापभञ्जनं मज्जनं विधाय वटमूलं जनाः समागच्छन्ति स्म तदा पश्यन्ति तत्र सिद्धासनबद्धं योगसन्नद्धं कमप्येकं महात्मानम्। तस्य दर्शनमात्रेणैव सर्वेषां हृद्देशे कश्चिदनिर्वचनीयो भावो प्रादुरासीत्। आकारमात्रेणैव तस्य महानुभावत्वं विद्योतते। तत्र कुतूहलपराणां जनानां सम्मर्दमनुभूयापि निमीलितनयनस्य तस्य नाभूद्दृष्टिप्रसारः। यावद्दिनं जनास्तं तथाविधमुपविष्टं दर्शं दर्शं जिज्ञासवोऽपि तेन सह न कञ्चिद्विमर्शं विधातुं शक्नुवन्। अविज्ञातेन शीलस्वभावेन मौनावलम्बिना सह संल्लपन्तुं न कोऽपि शशाक।

अन्येद्युरप्यैतादृशी स्थितिरासीत्। न्यग्रोधाधस्तात्स तथैवोपविष्टः सविस्मयं जनैर्दृष्टः। रात्रौ किमभूदिति जनाः न जानन्ति किन्तु विगतदिवसे स स्वस्थानान्मनागपि न चचाल। नापि कश्चित्तस्मै खाद्यं पेयं वा प्रायच्छत्। ईषदपि म्लानत्वं तस्यानने नाविष्कृतम्। मुखमण्डले दिव्यं तेजः, अङ्गेषु निरतिशयमपूर्वं मार्दवं नेत्रयोश्चाचिन्त्यं ज्योतिर्विराजते। हृदयस्यानवद्यत्वमौदार्यञ्च बहिरागत्य तस्य शान्तस्निग्धे वपुषि कृतावस्थानमिव प्रतिभाति। अद्यापि कश्चित्तस्य दृष्टिप्रसादं न लेभे। तथापि ग्रामात्कश्चिद् दुग्धं, केचन फलानि,

कश्चिदपूपं, कोऽपि गङ्गाजलञ्चानीय श्रद्धया तस्य पार्श्वे स्थापयन्ति स्म। तेषामुपभोगस्तु दूरमेव स्पर्शोऽपि तेन न कृतः। दिनाद्दिनमिति सप्तदिवसा व्यतीताः। एष वृत्तान्तः कर्णपरम्परया दूराद्दूरं प्रसरति स्म। नित्यमेव प्रातःकालान्निशामुखं यावत् तत्र गड्डलिकाप्रवाहवल्लोकास्तद्दर्शनेन स्वीयां धन्यतां विधातुं तमुपसर्पन्ति स्म।

तदानीं तस्य विषये विविधा वितर्का लोके प्रादुरासन्। कोऽयं, कुत आयातः, कियत्कालपर्यन्तमत्र स्थास्यति, क्व कदा चातो यास्यतीति न कश्चिज्ज्ञातुं प्रभवति। कश्चित्कथयति हिमालयादागतोऽयं परं सिद्धो योगी यं क्षुत्पिपासे न कदापि बाधेते। कोऽपि ब्रूते विन्ध्याटवीगहनगुहातो समाधेरुत्थितः सकलभगवद्गुणसमेधितोऽयमपूर्वदृष्टो महात्मा। कश्चिच्छ्रद्धालुस्तं स्वर्गलोकमपहाय धरातलेऽवतीर्णमलौकिकं देवं मनुते। ऋद्धिसिद्धिनिधिसम्पन्नोऽयं विरक्तो ब्रह्मानुरक्त इति केनचिदनुमीयते। भवेन्नामायमुच्चपदप्राप्तो गुप्तचर आगतो विशिष्टगूढ-प्रयोजनवशादिति केषाञ्चन विमर्शः। कश्चित्तस्य वयः समीक्षते। तस्य तपोराशिं केचनानुमापयन्ति। कोऽपि तस्यैतच्चमत्कारसारमेकभङ्ग्यावस्थानं कर्म वर्णयति। त्रिंशद्वर्षपूर्वं महति कुम्भपर्वणि स्नानार्थं प्रयागं गतस्यास्यैव ग्रामस्य जगन्नाथचतुर्धरस्य वियुक्तः स एव पञ्चवर्षीयः पुत्र एव क्वचित्सिद्धो भूत्वा स्मृतिपूर्वकं ग्राममिममागत इति केचित्तर्कप्रतिष्ठां कुर्वन्ति। एवं हि यस्य मुखे यदप्यायाति स तदेव सोत्साहमुत्फुल्लगल्लैरहमहमिकया निरर्गलं प्रकटयति। परन्तु न तस्याभिज्ञानं निश्चितैकमत्यं प्राप्नोति स्म। अतिविचित्रपरम्परावाहिन्यस्मिन् संसारेऽविदितचरितानां विस्मयकारिरहस्यभरितानामचिन्त्यभावानुभावसंवलितानां कैश्चिदन्यैरिव महाभूतैः ललितकलितानां सतां लोकोत्तराणां कीर्तिकथाप्रथां विज्ञातुं कोऽर्हति? मन्ये, स एक एवाद्वितीयोऽलौकिकः पुराणपुरुषो धृतनूतनकलेवरोऽत्र धराधाम्नि पूते च भागीरथीतीरे स्वमहिम्नाऽवतीर्णस्तथा च निरावरणे कठिनस्थण्डिले न्यग्रोधपादपतले कृतपदस्तिष्ठति। तस्याविचलस्थिरतां, मौनस्य दृढतां, गाम्भीर्यस्य प्रगाढताम्, औदासीन्यस्य प्रबलतां, निरपेक्षताया असीमतां, जीवनव्यापारस्य निश्चेष्टतां, निःस्वनशान्तिसुधासागरेण सह तन्मयीभवनयोग्यतां समालोच्य तस्य च शिरोरुहाणां कपर्दानां वा सुदीर्घतां जटिलतां च वटप्ररोहजालकानामिव दर्शं दर्शं जनैः स 'वटावतार' इति संज्ञया सोपाधिकः कृतः। तस्येयमभिख्या लोकेऽचिरेणैव समाख्याता।

एवं संसरति संसारेऽतिक्रामत्सु दिवसेषु, मासकतिपयैरेव प्रावृट्कालः

सान्द्रश्याममेघमृदङ्गध्वनिर्नभोऽध्वनि समायातः। वटावतारोऽयं महात्मवपुः कथं धारासारे जलदजलसम्भारेऽत्र स्थितिं विधास्यतीति समेषां श्रद्धातिशयपरिप्लुतचेतसां चिन्ताविषयोऽभूज्जनानाम्। ततोऽपसृत्य सुरक्षितं स्थानं प्रति प्रयातुं सविनयं निवेदनमपि नेषदिव स कर्णीचकार। तथैव शान्तस्निग्धो निर्विकाराकारो धारासारजलसम्पातेऽपि स समदृश्यत्। क्रमशः सर्वत उपचीयमानं जलौघमादाय गङ्गाप्रवाहस्तीव्रतरो सञ्जायमानोऽवलोक्यते लोकैः। सवेगं कूलं भरन्ती, कालसर्पिणीव स्फुरन्ती, निदाघे सुतन्वी सा सुरसरिन्महता जलौघेन स्वात्मानं विस्तारयन्ती धावं-धावं तटवर्तिक्षेत्राणि निजक्रोडे कुर्वन्ती भीतिमुत्पादयति स्म। गङ्गाया भयावहं जलप्लावनं विचिन्त्य श्रद्धालुभिर्भक्तजनैः स पुनरपि स्थानपरिवर्तनाय विनिवेदितः। अथेदानीं दृष्टिसङ्केतेन स सस्मितं निषिध्य तथैव तस्थौ। तस्य प्रफुल्ले वदनाम्भोजे स्मितिलावण्यं विलोक्य स्वजन्मपुण्यस्य धन्यतां दृष्टिसङ्केतेन च प्रसादस्य परां कृतार्थतां मन्यमाना जना विगतसन्देहा बभूवुः। गङ्गाजलौघोऽपि तस्य महात्मनश्चरणावुपस्पृश्य ब्रह्मकमण्डलुगत इव सुस्थिरोऽभवत् पश्चाच्च न्यवर्तत्॥

**वैराग्यदग्धकामानां जगतोऽसारताधियाम्।**<br>
**रहस्यं सिद्धसाधूनां को यो विज्ञातुमर्हति।।१।।**<br>
**अचिन्त्यचरितः ख्यातः कथायामत्र वर्णितः।**<br>
**योगी वटावतारः स कस्यास्ति विस्मयाय नो।।२।।**

**असम्भवं नाम न किञ्चिदस्ति**<br>
**चित्रं विचित्रं खलु भूतलेऽस्मिन्।**<br>
**विधिना विनिर्माय ह्यलौकिकं तत्**<br>
**प्रदर्शितं विस्मयहेतुभूतम्।।३।।**<br>
**कथारसज्ञैरमृतं कथाया**<br>
**आकूणिताक्षैः पीतं यदि स्यात्।**<br>
**मन्ये तदाऽहं नीतो विनीतो**<br>
**यशः प्रयत्ने कविकोविदानाम्।।४।।**

●

## कृपणः

अस्मिन् विश्वविद्यालये मया सहैवाऽन्योऽप्येकः प्राध्यापको नियुक्तः पदभारमङ्गीचकार। अहं संस्कृतविभागे स त्वर्थशास्त्रविभागे। तस्य नामाक्षराण्यासन् डॉ. ब्रह्मदेवप्रसादश्चक्रवालः। अयं चक्रवालमहाशयः पर्वतीय आसीत्। चयनसमितिसदस्यविशेषज्ञैरयं बहुप्रशंसित इति श्रूयते। तदानीं नियुक्तयोऽभ्यर्थिनां योग्यतानिकषपरीक्षणेनैव भवन्ति स्म। अयं निजः परो वेति गणना न भवति स्म। नापि परिचयस्य, न महानुभावानामभिप्रेतसिद्ध्यर्थानुरोधस्य, न राजनीतिपाशषड्यन्त्रस्य, नापि धनबलस्य कश्चित्प्रयोगस्तदानीमेतादृशेषु कार्येषु क्वचित्कर्णपथमायाति स्म। शिक्षणं विद्यादानमिति पवित्रतमं सर्वस्पृहणीयं प्रशंसनीयं च कर्म मन्यते स्म। शिक्षकोऽध्यापको गुरुरिति महती प्रतिष्ठा। श्रद्धास्पदं गौरवं च समाजे परम्परारूढा तस्य विराजते स्म। शिक्षकोऽपि गुरुत्वं बिभर्ति स्म। चरित्रेणाचरणेन च स समाजे आदर्शजन इव पूज्यते स्म। गुरोश्चरणकमलध्यानं गुरोश्च महिम्नो गानं जनाः-

**गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।**
**गुरुः साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः।।**

इत्येवं सश्रद्धं कुर्वन्ति स्म। गुरुगौरवगन्धिकः सोऽध्यापकः स्वकर्मनिष्ठया छात्राणां प्रीतिभाजनं लोके च कीर्तिभाजनं प्रतिभाति। चक्रवालमहाशयोऽपि तैस्तैर्गुणैर्गुरुरिति पदं विभूषयति स्म।

आवयोर्नियुक्तिकाले विश्वविद्यालयीयप्राध्यापकस्य वेतनक्रम आसीत्-

रु० ७००-१६००। यावदहं स्मरामि मम प्रथमो वेतन रु० ९५६ इति शिक्षकोचितश्चासीत्। कारणम्, एतादृशी भयावहा महर्घता नासीत्तदानीम्। शिक्षक: परमतुष्टो भवति स्म। अतो मनोयोगत: पठति पाठयति स्म। इदानीन्तु नवनियुक्त: प्राध्यापकश्चत्वारिंशत्सहस्रमुद्रां प्राप्नोति। 'प्रोफेसर' इति पदवीं दधाना: शिक्षकास्तु प्राप्नुवन्ति लक्षात्मकं वेतनम्। तथापि तेषां नावश्यकतापूर्ति: नापि कश्चित्सञ्चय:। वेतनविषये यथाहं तथैव चक्रवाल:।

चक्रवालस्य स्वकीयं वैशिष्ट्यं किमपि विलक्षणमासीत्। अतिसामान्यं खादीवस्त्रं परिदधाति। किन्तु तदपि तस्य शरीरे शोभते- 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्!' यथा पर्वतीयपुरुषाणां शरीराकृतिर्भवति तथैव शरीरं चक्रवालस्य, नेतरम्। मध्यमकोटिदैर्घ्यं शररीरस्य वर्णमपि गोधूमकान्तम्। आनने दीर्घो नासिकादण्डो नयनयो: सेतुरिव प्रतिभाति। नेत्रेऽपि वीटिकाछिद्रायमाणे। आकुञ्चितकुन्तला: तैलचिक्कणा: और्णशिरस्का: कर्णावरणभूता: पार्श्वावलम्बिन: कपोलौ ईषदिव चुम्बन्ति स्म। मुखमलङ्कुर्वाणं मुक्तहास्यं कदाचिन्नैव दृष्टं केनापि। तस्य मन्दस्मितमेव तस्य हार्दिकीं प्रसन्नतामभिव्यनक्ति। वर्षास्नात: स्थाणुरिवायमेवानुमूर्तिरिति ख्यात:। एतदतिरिक्तं ते जनास्तमपरेणाप्येकेन विशेषेणेन तिरस्कारभावं प्रापयन्ति। सोऽस्ति विशेषक: 'कृपण' इति।

यदि भवान् चक्रवालमहानुभावस्य शरीरे स्तरीयं परिधानं द्रष्टुं समुत्सुकोऽस्ति तदा नैराश्यमेव भवता सह मित्रत्वं साधयिष्यति। अहो विश्वविद्यालयीयप्राध्यापकानां परिवेशो वेषश्च! ते स्वीयवेषविन्यासे विशेषतो यत्नपरा: भवन्ति। यतो हि **'किं वाससैवं न विचारणीयं वास: प्रधानं खलु योग्यताया:'** इति नीतिवचनं तु सर्वत्र युज्यते। किन्तु चक्रवालमहोदयस्य सिद्धान्त: कश्चिदन्य एव। स कथयति- "वस्त्रं तु लज्जागोपनाय शरीरावरणाय च। अतो वस्त्रस्य महर्घतया किम्? वस्त्रं स्वच्छं स्यात्। स्वच्छं वस्त्रमेव परिधातव्यम्। वस्त्रेण सह योग्यताया: न कोऽपि सम्बन्ध:। अस्माकं महर्षय: किंनाम महर्घं वस्त्रं धारयन्ति स्म? अस्मिन्नेव युगे पश्यन्तु महात्मानं गान्धिमहाभागम्, अन्याँश्च कर्मयोगिन:। किं वस्त्रेण तेषां माहात्म्यं, गौरवं ख्यातिर्वा?"

नास्ति चक्रवालो विवाहित:। जना तमुपहसन्ति- "नास्त्यस्य करे

विवाहरेखा। जन्मपत्रिकायामपि विवाहयोगो नास्ति। अहो विधेरसहृदयत्वम-सहिष्णुत्वञ्च! एतत्कृते काचिद् बालिकैव न निर्मिता तेन। एकाकी एवोत्पन्नो जीवनमपि एकाकी एव व्यतीत्येहलोकात्परलोकं गमिष्यति। तत्रापि का गतिर्भविताऽस्येति को जानाति? पुत्रहीनानां नरके वासो नियत एव। उक्तमेव- **'सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे।'** अत्र तु दाम्पत्त्यसुखं न लिखितं ललाटे तत्रापि ललाटं स्फोरयिष्यति कपाटे। **'अग्रे नासारज्जुर्नास्ति पश्चान्नास्ति च प्रग्रहः। इतस्ततो भ्रमति चासौ भाग्यं रोदिति गर्दभः।।'** इत्युक्त्वा सर्वे निर्भरं हसन्ति।

**'गृहं हि गृहिणीहीनमरण्यसदृशं मतम्'**, अतश्चक्रवालो गृहिणीहीनः किमर्थं गृहं निर्मातु गृहसम्भारं वा योजयतु। आवश्यकतोचितानि न्यूनतमानि एव गृहोपकरणानि तस्य गृहे विलोक्यन्ते। वस्तुतो गार्हस्थ्याय स मनागप्यवधानं न ददाति। जीवनधारणाय यद्यद् यावच्च करणीयं तत्तदेव स करोति, नान्यत्। विश्वविद्यालयचर्यैव तस्य दिनचर्या— पठनं पाठनं लेखनञ्च। व्यर्थमेव स कस्यचिद् गृहमपि न याति। क्षणशः कणशश्चैव विद्यामर्थं च चिन्तयेत्। स कालस्य सदुपयोगं करोति। भोजनपात्रे चाशनप्रसङ्गे कणमपि न त्यजति। अन्नं वै प्राणाः। अन्नहानिस्तु प्राणहानिरेव। ये पर्याप्तं भोजनं गृहीत्वा प्रभूतमुच्छिष्टं कुर्वन्ति ते वस्तुतः पापकर्मिणः। अस्मिन् धरामण्डले न जाने कियन्तो दरिद्रा हतभाग्या निर्धना वराकाः जलमन्नं विना बुभुक्षया नित्यमेव प्रतिक्षणं मृत्युमुखे यान्ति। कल्पनयैव हृदयं वेपते किन्त्वेते स्वार्थिन उदरम्भरा भोज्यान्नं विकुर्वाणा मनागपि न लज्जन्ते। चक्रवालो न क्वचित्प्रीतिभोजे भोक्तुं याति। स दिने एकवारमेव भोजनं पचति। अस्त्येव स्वपाकी। प्रातर्दुग्धाहारः ततश्च विश्वविद्यालयगमनात्प्राक् स्वल्पाहारः। मध्याह्ने तक्रपानम्। विश्वविद्यालयान्निवृत्तः ऋतुफलान्यास्वादयति। रात्रौ केवलमेकवारं रन्धनकर्मणि प्रवृत्तः.कदाचित्कृशरं कदाचिच्च रोटिकां सूपं शाकं वा निर्माति। स्वपक्वं सुरुचिपूर्णमिति भगवते निवेद्याश्नाति। चक्रवालो यथा मितभाषी तथैव मित्रभोजी च। स हितं वक्ति हितं च भुङ्क्ते। युक्ताहारविहारः स एवं कालं यापयति।

चक्रवालो न पिबति चायं कॉफीं वा नास्वादयति च ताम्बूलम्। इदं द्वयमपि व्यर्थम्। अनयोः सेवनेन न कोऽपि लाभः इति तस्य मनसि

विद्यार्थिजीवनादेव चिन्तनं व्यवस्थितं सुप्रतिष्ठितं च। एकदा तस्यैकं मित्रमध्यापको यः सदैव अजेव ताम्बूलचर्वणं करोति, तमामन्त्रयामास निःशुल्कं ताम्बूलं प्रदातुम्- "यावदहं सेवारतस्तावत्पर्यन्तं ते ताम्बूलव्यवस्था मम पक्षतो भविष्यती'ति। किन्तु चक्रवालः सविनयं निषिध्य सहासं पृष्टवान्- "ततः किं भविष्यति? ते सेवानिवृत्तौ ताम्बूलभक्षणाय मह्यं को दास्यति?" तत्रत्यैर्जनैः प्रथमं वारं चक्रवालस्यानने निर्भरं हास्यं दृष्टम्। पुनः स उपदेशमुद्रया प्रोवाच- "अपि वक्त्रं ताम्बूलचर्वणेन शोभनं दृश्यते? न श्रुतं भवद्भिः—

**'मृषा वदति लोकोऽयं ताम्बूलं मुखभूषणम्।**
**मुखस्य भूषणं पुंसां स्यादेकैव सरस्वती।।'**

वस्तुतः ताम्बूलचर्वणादीनि व्यसनानि शिक्षकैस्त्याज्यानि। तत्किमपि न सेवनीयं यत् छात्राननुपदेष्टव्यम्। मुखे ताम्बूलं निधाय कथमहं छात्रान् वक्ष्यामि- "भवद्भिः ताम्बूलं न सेवनीयम्" इति। क्व ममैतादृग्वचनस्य प्रभावः? अतो भवतस्ताम्बूलं भवन्तमेव शोभते।" चक्रवालः प्रगल्भ उपदेशक इहैवं ब्रूते इति कस्यचित्कल्पनायामपि नासीत्। सर्वे मौनास्तदानने बद्धदृष्टयस्तस्थुः।

चक्रवालो विश्वविद्यालये कथमपि जलपानगृहं न याति। तत्र न स्वयमल्पाहारं करोति न तु कमपि कारयति। एकदा परीक्षाकाले कक्षनिरीक्षणे नियोजितः तस्यैव विभागस्य कश्चित् सहकर्मी, 'अद्यानेन किमपि व्ययमवश्यमेव कारयिष्यामी'ति मनसा विचिन्त्य प्रकटतया प्रोवाच- "अयि सुहृद्बन्धो! अद्य प्रातः शीघ्रमत्रागन्तव्यमिति विलम्बभयान्मया स्वल्पाहारो न गृहीतश्चाय-पानमपि न कृतम्। यथाकथञ्चित्सत्वरं विनिर्गत्य परीक्षायां कर्तव्यं निर्वोढुमागतोऽस्मि। कृपया कारयतु स्वल्पाहारम्। भवादृशाग्रजसमक्षं यदि स्वयमेतत् करिष्यामि, अनुचितं स्यात्।" चक्रवालस्तु यथार्थोऽर्थशास्त्री। स चिन्तितवान्- 'यदीदानीमेतं स्वल्पाहारं चायपानं वा कारयिष्यामि, सोऽन्यानपि सूचयिष्यति। आगामिदिवसे कोऽप्यन्यो मम कक्षनिरीक्षणसहायो भविता। सोऽपि मामेवमेव कथयिष्यति। इत्थं या परम्परा प्रारप्स्यते, सा मत्कृतेऽनर्थ-कारिणी। अतो प्रारम्भ एव नष्टे मूले कुतः शाखा?' एवं विचार्य सोऽपि गम्भीरमुद्रोपेतः तं तर्जयन्निवोवाच- "बन्धो! भवान् मां सम्यग् विजानाति।

अहं स्वपुटके मुद्राः न स्थापयामि। गृहात्पदातिरेव ममागमनं गमनञ्च। बहिर्भोक्तुं मम स्वभावोऽपि नास्ति। अतोऽसमर्थोऽस्मि भवतोऽभिलाषां पूरयितुम्। यथा भवान् वदति तथा नास्ति। एतामलीकामभ्यर्थनां जानाम्यहम्।'' इत्येवमुक्त्वा चक्रवालः कमपि परिचरमाहूय सहकर्मिणं प्रोवाच- ''प्रयच्छत्वस्य द्रव्यमानेष्यत्ययं भवतोऽभिलषितम्।'' स तु- ''गच्छ गच्छ, स्वनियोगमशून्यं कुरु।'' द्वयोर्मध्ये घटित एष वृत्तान्तः पार्श्वकक्षस्थैर्निरीक्षकाध्यापकैः शुष्केन्धनेऽग्निरिव सद्य एव सर्वत्र ख्यापितः। अद्याप्यस्य चर्चा तत्र विश्वविद्यालये यदा कदा भवत्येव।

मितम्पचः स चक्रवालः स्वपाकी बुभुक्षानुरोधादेव पाकं करोति। स स्वयमेव सर्वाणि गृहकार्याणि करोति। सर्वकर्मणि कुशलः स आलस्यमिषदपि न भजते। सूर्योदयात्प्रागेव स स्नात्वा भगवतोऽर्चनं पूजनञ्च करोति। एतत्पूर्वं स पात्रमार्जनं, गृहसम्मार्जनं वस्त्रप्रक्षालनं च करोति। न कश्चिद्भृत्यो नियुक्तस्तेन। नापि कस्यचित् छात्रस्य शोधार्थिनो वा सेवां गृह्णाति। यावदन्ये इतस्ततो भ्रामं-भ्रामं आलापे संल्लापे वा कालं यापयन्ति तावदेव समयस्य सनियमं सदुपयोगं कृत्वा स एतानि कार्याणि अनायासमेव समाप्नोति। स्वकीये धर्म-कर्मनिर्वाहे कीदृशी लज्जा? 'अहं विश्वविद्यालये आचार्योऽस्मि एतत्कार्यं कथं करोमीति मिथ्याभिमानः। तन्न किमपि कार्यं निम्नं भवति यन्न दूषयति गुणान्। यदि भोजनं करोमि तत्पाचने का व्रीडा? यदि दूषणं करोमि तन्निवारणे मार्जने वा कः सङ्कोचः? एतानि कर्माणि कुर्वाणोऽपि चक्रवालस्तु चक्रवाल एव न तस्यानुभावे किमपि क्षीणत्वं नापि काचिद् हानिः।

भिक्षुकेभ्यो याचकेभ्यो वा चक्रवालः स्फुटितकाकिनीं ददातीति न केनचित्कदापि दृष्टम्। दुर्गापूजनोत्सवाऽऽयोजकाः तस्मात्कदापि किमपि प्राप्तवन्तः इत्येवं न कश्चित्स्मरति। कदाचित्तान् तिरस्कृत्य स ब्रवीति स्म- ''आडम्बरमिदं न प्रोत्साहनार्हम्। प्रतिमां स्थापयित्वा एते आयोजका केवलं धनसङ्ग्रहं अहोरात्रं च ध्वनिप्रदूषणं वितन्वन्ति। श्रमं विनाऽर्जितं धनं जलमिव प्रवाहयन्ति। पाश्चात्यसङ्गीतध्वनिविमुग्धा निर्लज्जमङ्गप्रदर्शनपूर्वकं नृत्यन्ति, मादकद्रव्याणि च सेवन्ते। अपि प्रसीदति दुर्गा सरस्वती वा जगज्जननी एभिः दुष्कृत्यैः? कीदृशीयं पूजा यत्र न मनःशान्तिः नापि सात्त्विकाचारः? तत्र धनं दत्त्वा

कथमहं भगवतीं लक्ष्मीं लाञ्छनयुतां करोमि? अयं सङ्क्रामकपूजारोगो यथाशीघ्रं निवारणीय इत्येवं समाजस्य, धर्मस्य, संस्कृतेश्च रक्षणं दूषणनिवारणञ्च। भिक्षुकान् प्रत्यपि तस्य भिन्नैव धारणा। स बालान्, जराजर्जरान्, रोगपीडितान् विशेषतः कुष्ठरोगग्रस्तान्, भङ्गाङ्गान् भिक्षुकान् दर्शं दर्शं तेषां दीनवचनं श्रावं-श्रावं दयाऽऽकुलितमानसोऽपि तेभ्यो न किमपि ददाति। स कथयति- ''एते भिक्षुका महान्तो धनवन्तः। समाजशरीरे गण्डोपरि स्फोटका इव पीडादायकाः। अपराधिनां समूहो भ्रमति भिक्षुककञ्चुकपरीतः। एते किं किं न कुर्वन्ति। भिक्षाटनव्याजेन भिक्षुका भिक्षुण्यः ग्रामेषु नगरवीथीसु दिवसालोके भ्रमन्ति। एभिर्दत्तसङ्केता अन्ये दक्षचौराः सहयोगिनो रात्रौ कलाभिर्बलप्रयोगैर्वा तत्र भवनेषु प्रविश्य पणिभिर्बृहस्पतेर्गाव इव यथोपलब्धं वस्तुजातमपहरन्ति। अतो नैते दयापात्राणि। एते एव शिशूनपहृत्य तेषामङ्गभङ्गं कृत्वा करुणाभाजनं विधाय क्वचिन्मार्गेषु चतुष्पथेषु हट्टेषु कुत्रचित्सार्वजनिकस्थलेषु रेलादियानेषु वा सम्प्रेष्य भिक्षावृत्तिमारोपयन्ति। यथासमयं गत्वा तैः सञ्चितं धनमाहरन्ति। भिक्षाटनाय तेषां पोषणं कुर्वन्ति। इत्थमियं दुष्प्रवृत्तिमूला भिक्षाटनवृत्तिः। तेषां केषाञ्चित् प्रेमिका अपि भवन्ति। एते भिक्षुकाः प्रायेण लोकस्य करुणावृत्तेः शोषणं कृत्वा धूमवीटिकाः, मादकद्रव्याणि च सेवन्ते चित्रालयेषु च रमन्ते। यदा-कदाचिदेतेषां विलक्षणं वृत्तं वार्तापत्रेषु प्रकाशितं दृश्यते।

अयं चक्रवालो विलक्षणः प्राणी। स महान् कृपण इति सर्वत्र ख्यातः। कोटिभिरुपायैरपि तस्मात्काकिणीमपि ग्रहीतुं न शक्यते। तत्र विश्वविद्यालयस्य सर्वेऽध्यापका अधिकारिणः कर्मचारिणश्चेमं चक्रवालमहाशयं भगवतो ब्रह्मणः कमप्यपूर्वं विशिष्टविचित्रसृष्टिरचनाविधानोद्भूतपशुपुङ्गवं समुद्घोषितवन्तः। तेषु केचन कौतुकिनः तस्माद्धनमाहर्तुं योजनां कामपि परस्परं मन्त्रणया निर्धारितवन्तः। अस्त्येका युवतिविषये तन्वी श्यामेति मेघदूतस्य नायिकेव ललितकलाविभागे ललितललिता सौन्दर्यसारकलिता हरेर्मायेव विमोहिनी मोहिनी नाम्नी प्राध्यापिका याऽध्यापकमण्डले 'चित्रपर्णी' (तितली) इति हासपरिहासप्रसङ्गेषूच्यते। सापि वीणाकलनादिनी मन्दमधुरवादिनी प्रगतिशीला प्रकटितविलासलीला, 'जना मम सौन्दर्यं प्रशंसन्ती'ति मनोमुग्धा किञ्चिदुन्मुक्तं हसति। यथा महेन्द्रेण मर्त्यलोके मुनीनां तपोनिरतानां व्रतभङ्गाय दिव्याङ्गनाः प्रयुज्यन्ते तथैव ते कुतूहलिनोऽध्यापकाश्चक्रवालं प्रविचालयितुं तां मोहिनीं सर्वमाख्याय प्रेरितवन्तः। सा विशुद्धोपहासभङ्ग्याऽस्मिन्

कुतूहलप्रयोगे प्रतिभागित्वाय स्वीयां स्वीकृतिं दत्तवती।

अथैकदा सा मोहिनी अर्थशास्त्रविभागस्याध्यापककक्षे चक्रवालमहोदयं द्रष्टुं गतवती। तत्र तं न प्राप्य तस्मिन् विषये पृष्टवती। तदानीं येऽध्यापकास्तत्र कक्षे समुपस्थिता आसन् ते सर्वे विस्मिताश्चमत्कृता:— 'इयं चपला कुतो विस्फुरितवती'ति स्मितलोचना: स्वागतवचोभिस्तां सत्कृत्य, "उपविशत्वुपविशत्वत्रभवती"ति समुपवेशयामासु:। ते तया सह वार्तालोभोत्सुका:, "कक्षाध्यापने निरतश्चक्रवाल आगमिष्यति कैश्चित् क्षणै:" इति सूचितवन्त:। तत्र केनचिद्रसिकहृदयेन- "शीतलमुष्णं वा किं रोचते भवत्यै" इत्यपि प्रस्तावितम्। सा तु "न किमपीदानीं, धन्यवादा:" इत्युक्त्वा तं प्रतिषिद्धवती। स वराको मनाग् विमनायते स्म। अन्यैरपि सँल्लपन्ती कियत्कालानन्तरं यावत्सा प्रतीक्षमाणा गमनोत्सुकाऽभवत्तावदेव चक्रवाल: कक्षे पदमर्पितवान्। तथागतं तमवलोक्य सर्वेऽध्यापका: सहसैवैकस्वरेण- "आगतोऽयं डॉ० चक्रवाल" इत्युचु:। सोऽपि सम्भ्रमं, "अन्य दिवसेषु त्वैतादृशो न भवति, अद्येदानीं को विशेष" इति विचिन्त्य यावत्कक्षे दृष्टिपातं करोति तावत्तां षोडशशृङ्गारमण्डितां सम्मोहनविद्यापण्डितामिव नयनाभिरामां रामां चकितचकितमपश्यत्। "इयमत्रभवती कियत्कालेन त्वां प्रतीक्षमाणा विराजते" इति कश्चिदध्यापक ईर्ष्याकषायितनेत्राभ्यां तं पिबन्निव चक्रवालं सम्बोधितवान्। चक्रवालस्त्वाकाशमुत्प्लुत्य गच्छन्निव सहसा मुखं विवृत्य प्रोवाच- "माम्?" सोऽब्रवीत्- "अथ किं माम्?" मोहिनी तु सस्मितमुखी तथैवासीना तन्त्रीस्वरमधुरं जगाद- "डॉ० चक्रवालबन्धो! त्वया सहैका विशिष्टा वार्ता करणीया वर्तते। क्षणद्वयं याचे त्वाम्।" चक्रवालस्तामनिच्छयेव पश्यन्नुवाच- "आदिशत्वत्रभवती, शृणोमि क्षणम्। यतो हि तत्कालमेवान्यस्मिन् वर्गे कक्षा पाठितव्या। छात्रास्तत्र प्रतीक्षमाणास्तिष्ठन्ति।"

"यद्येका कक्षाऽन्तरिता, अपि काचिद् हानि:?" सा सकटाक्षं प्रबोधितवती।

"नायं मम सिद्धान्त:। कक्षाया उपेक्षा कदाचिदपि नैव कर्तव्या। छात्रेषु विपरीत: प्रभाव: स्यात्। अध्यापक एव, य: समाजस्यादर्शभूतो मनुष्य:, यद्येवं करिष्यति तदान्येषां तु कथैव का? शिक्षणं नाम न व्यवसायो, वस्तुतोऽध्यवसायोऽयम्। आ:, क्षम्यताम्। अहं तु भवतीमुपदिशामि।

कीदृशं मे बालिशत्वम्। धिङ् माम्। अथ ब्रवीतु भवती''त्युक्त्वा विरराम।

''भवतु नाम, अनवकाशः खलु त्वम्। वार्ता महत्त्वपूर्णा वर्तते। सा तु कालापेक्षिणी। गच्छामीदानीम्। त्वमेव कालनिर्धारणं कुरु। कदा मां श्रोष्यसि?''

''कथं कष्टं करिष्यति भवती? अहमेव भवतीं द्रक्ष्यामि।'' इत्युक्त्वा सः किमप्युत्तरं न प्रतीक्ष्य कक्षां प्रति प्रतस्थे। सा मोहिनी चक्रवालस्य व्यवहारमिममसहमाना रोषावेशविवशा सर्पिणीव ग्रीवामुत्ताम्य ततोऽपससर्प। तत्रत्या अध्यापकाः विस्मिताः सस्मिताश्चैतद् वृत्तं निभाल्य, चक्रवालस्य रूक्षं व्यवहारमनुचिन्त्य मोहिन्या निराकृतिमनुमीय विभागपक्षतः सापराधा इव तस्थुः। अचिरेणैवेषा वार्ता विश्वविद्यालये परिव्याप्ता।

यदा चक्रवालः कक्षातः समागत्य स्वस्थाने समुपाविशत्, तस्य विभागीयोऽध्यापकः कश्चित्तं तर्जितवान्- ''डॉ० चक्रवाल! त्वया शोभनं नाचरितम्। यदि सा मनसि किमपि सम्प्रधार्य त्वया संल्लपितुमागता, क्षणमवधानं दत्वा प्रेम्णा तस्याः वार्तां श्रोतुमर्हसि न त्वेवं निराकर्तुम्। सर्वे सन्त्यध्यापकाः, ते स्वीयां कक्षां पाठयन्ति, यद्येकदा कश्चिद् विलम्ब एव स्यात्तदा को वज्रपातो भवेत्। त्वया तां दृष्ट्वा क्षमायाचना कर्तव्या। एवं कृते सति साऽवश्यमेव प्रसीदति।''

मौनं श्रुत्वा चक्रवालो गभीरतया प्रोवाच- ''भवता समीचीनमुपदिष्टम्। किन्तु सर्वमहं जानामि। अत्र तत्कथनेन किं स्यात्? नाहं बालो यस्य कस्यचिद्दुरभिसन्धौ पतामि। इयं तत्रभवती डॉ. मोहिनी स्वयं नागता ह्यत्र। नास्ति तया सह मम कश्चिद्विशेषपरिचयः। केनचिन्मन्मित्रेण प्रेरिता सती सा वञ्चनाधिया मम सकाशमागवती। प्रयोजनमासीत्तथाप्रचारितं मत्कार्पण्यमपाकर्तुम्। केनचित् व्याजेन सा मां विश्वविद्यालयीयजलपानगृहं नयेत्। तत्राहं तां पृष्ट्वा तस्या अभिलषितं खाद्यं पेयं वाऽऽदाय तया सह सहासमास्वादयामि। मूल्यं दत्वा पुनरपि एवमेवाऽऽगमनाय निमन्त्रयित्वा तां तस्या आवासं प्रापयित्वाऽऽपृच्छ्य च निजावासं गच्छामि। भवन्तः सर्वे जानन्ति, चक्रवालोऽहम्। न चिन्तयामि कः क्रुध्यति कश्च प्रसीदति। यदि मया तथैव करणीयं, सपत्नीकोऽहमपि सद्गृहस्थः सन् सुतसुतानां पितृपदमलङ्कुर्वाणो विहारामि। किन्तु मम जीवनस्यान्यदेव प्रयोजनम्।''

सवेदनमेवमुक्त्वा स चक्रवालस्तमध्यापकं तथाऽपश्यद्यथा स कोऽपि क्षुद्रजन्तुः स्यात्, यस्य संगतिरपि तस्मै न रोचते, का कथा संवादस्य। सोऽप्यध्यापकश्चक्रवालस्य तां भङ्गिमां विलोक्य किमपि प्रत्युत्तरं दातुं न शशाक। केवलं मनसि, "वज्रहृदयः प्रस्तरमानसः, हृदयहीनः, परमकदर्यः, विशिष्टोऽशिष्टः, शुष्ककाष्ठकर्कशः, कुतर्काग्रहः, मिथ्याभिमानः, मतिभ्रष्टरित्यादिभिः न जाने कैः कैर्विशेषणैः संयोज्य, तत्रान्तर्गालिदानेनोपकृत्यैवं तं दृष्टवान् यद्यदि सोऽधिकृतः स्यादविलम्बमेवार्धचन्द्रं दत्वा विश्वविद्यालयाद्बहिष्कृतं कारयेत्। तत्र प्राध्यापककक्षे एवाऽचिन्त्या शान्तिर्भूता।

कियत्कालपर्यन्तं विश्वविद्यालये एकैव चर्चा भवति स्म- "चक्रवालविचालने मोहिनी विफला। अयं तु तस्या अनिन्द्यसौन्दर्यस्यापमानः। धिग् रे चक्रवाल, व्यर्थमेव विधाता त्वां मनुष्यं रचयामास। त्वं तु स्थाणुरेव शोभसे। यां मोहिनीमालपितुं जनाः लालायिता भवन्ति, प्रतीक्षमाणां तथाभूतां तामेव तिरस्कृतवानयं चक्रवालः। मोहिनी कदापि तूष्णीं न स्थास्यति। साऽवश्यमेव चक्रवालं तादृशं विधास्यति यादृशोऽयं क्वचिन्मुखमपि दर्शयितुं योग्यो न स्यात्।" एवमन्यैरपि विकत्थनैः जल्पमल्ला ताम्बूलभृतगल्ला भल्लं जल्पन्ति। चक्रवालस्य 'कृपण' इति पूर्वसंज्ञा कैश्चिदन्यैरपि विशेषकैः कृतार्थतां गता। अतः परं स कृपणश्चक्रवालो'ऽव्यय' इति, 'चट्टान' इति, 'शुष्कस्थाणु'रिति 'प्रस्तर' इति, 'अन्ध' इति निरर्गलं सम्बोध्यते। किन्तु सोऽपि कैश्चिद्विलक्षणैः पञ्चमहाभूतपरमाणुभिर्निर्मितोऽस्ति, मनागपि न विचलितः।

येऽध्यापकाश्चक्रवालं विजानन्ति, ते तर्कयन्ति स्म- "अयं कृपणः (मक्षिकाचोषकः) किं खादति? किं पिबति?? न कुटुम्बं, न सेवकः। न जाया, न हि सन्ततिः। सामान्य एव भाटकावासे निवासः। यद् वस्त्रं परिदधाति तदपि न महर्घम्। सर्वत्र पदातिरेव गच्छति। न चायपानं, नापि ताम्बूलसेवनम्। नापि किमपि दुर्व्यसनम्। सर्वमेवार्जवं जीवितम्। आपणे कदा किं च क्रीणातीत्यपि न कश्चित् पश्यति। भूयानेव वेतनराशिः। अधिकतमं पञ्चसहस्रं व्ययमेष्यति प्रतिमासम्। शेषं धनं किं करोति? अपि 'शेयरा'दिषु विनियोजयति? यतो ह्ययं यथार्थोऽर्थशास्त्री। अथवा, बैंक एवानेन सर्वं सञ्चितं धनम्। भवतु नाम, अस्मिन् मृत्युमापन्ने किं भविष्यत्यस्य सङ्गृहीतधनस्य। अस्य पितरौ, बान्धवाः भगिन्यादयोऽपि न श्रूयन्ते।

केषाञ्चिच्छायापि कदाचिदत्र न दृष्टा। अयं द्वादशमासपर्यन्तमत्रैव निवसति। न गच्छति ग्रामं गृहं वा। केवलं शैक्षणिकयात्रास्वस्य बहिर्गमनं श्रूयते। यावदारभ्याऽयं विश्वविद्यालयेऽध्यापयति, यश्चास्य वेतनक्रमः, तेनानुमीयतेऽस्य सङ्ग्रहः पञ्चाशल्लक्ष रुप्यात्मकोऽवश्यमेव स्यात्। हा रे कृपणवृत्तिः कृपणस्य च धनम्! सत्यमेवोक्तम्- "कृपणस्य मुखदर्शनं पुण्यनाशनं पापप्राशनं वा। मा करोतु भगवान् कमपि कृपणम्।"

कालः कलयति जनान्। कालेन तिरोहिता मोहिनीविषमवार्ता। चक्रवालः प्रायोऽन्येऽप्यध्यापका विस्मृतवन्तो वार्तामिमाम्। चक्रवालस्य स्वभावः, कर्तव्यनिष्ठा, विश्वविद्यालयसेवा, व्यवहारो दिनचर्या च सर्वमेव तथैव प्रतिभाति। कः साधुः कश्चासाधु इति सामान्यतया सहसा निर्णेतुं न शक्यम्। एवमेव चक्रवालस्य विषयेऽपि जना मन्यन्ते। यस्य यादृशी भावना, किञ्चिद् वस्तु कश्चिद्वा जनः तस्मै तादृश एव प्रतीयते। ये गभीरस्वभावाः कर्मयोगिनः कथं ते सावकाशाः स्युस्तादृशं वार्ताप्रपञ्चं प्रति मनः प्रेषितुम्? किन्तु येषां न किमपि कर्म, ये च लघुकस्वभावास्त एव मनोरञ्जनार्थं जीवयन्ति तादृशं वार्तारूपकम्।

अथ कदाचिद् विश्वविद्यालयस्य केचनाध्यापका गता आसन्नेकस्मिन् विवाहसमारोहे। तत्र डॉ० चक्रवालस्य स्वरूपं दर्शं दर्शं तेषां नेत्रे विस्फारिते एव। स यथापरिवेशं कृतमङ्गलवेशः कन्यापक्षतोऽभ्यागतस्वागतसपर्याव्यवस्थां निर्दिशति स्म। जनास्तं पृष्ट्वा स्वे स्वे कर्मणि व्यापृता भवन्ति। एतद्दृष्ट्वा तेषामध्यापकबन्धूनां कौतूहलस्य सीमैव नासीत्। स एतेषां मित्राणामपि हार्दं स्वागतं कृतवान्। यथा व्यवहरति तथा प्रतीयते यदस्य कन्यायाः भगिन्या वा विवाहोऽयम्। तानि मित्राणि स्मयमानानि सविस्मयं पृष्टवन्तः- "कथमत्र भवान्?" सोऽपि स्मिताननोऽब्रवीत्- "यथाऽत्रभवन्तः।" पश्चाच्च रहस्यमुन्मीलितम्- अतीव निर्धनपरिवारस्यैषा कन्या चक्रवालस्य शिष्याऽस्ति। चक्रवाल एव तां एम.ए. कक्षायां शुल्कपुस्तकादीनां सर्वसौविध्यं प्रदाय पाठयामास। इदानीं सा प्रथमश्रेण्यामुत्तीर्णाऽनुसन्धानकार्यं करोति। तस्याः पितरौ चक्रवालं साक्षाद्देवमिति सबहुमानं मानयतः। अयं गुरुश्चक्रवालो वरान्वेषणादारभ्य सर्वं वैवाहिकं मङ्गलकार्यं स्वकीयेन व्ययेन करोति। वरः सजातीयः सुयोग्यः प्रान्तीयसेवायां नियुक्तोऽधिकारी। स गुरुजनस्य

चक्रवालस्यैतद्दाक्षिण्यं महानुभावत्वं चानुभूय किमपि यौतकं विना कन्यां वधूमित्यङ्गीकृतवान्। तथापि चक्रवालो मुक्तहस्तेन व्ययं कृत्वा समृद्धं विवाहोत्सवमायोजितवान्। तस्यौदार्यस्य प्रशंसां क्रियमाणा जिह्वा श्रान्तिं नानुभवति। कृपणस्यास्य विचित्रमिदं वृत्तं श्रावं श्रावं तान्यध्यापकमित्राणि ''धन्यधन्योऽसि'' इति वारंवारमुच्चार्य तस्मै साधुवादं प्रदत्तवन्तः।

अनेन रहस्यभेदनेन सहैव चक्रवालस्य कार्पण्यमूलाः नैके भेदाः समुद्घाटिताः। स न केवलं स्वकीयच्छात्राणामपितु समाजस्य दीनहीन-कुटुम्बानां जनानाञ्च मनसा वाचा कर्मणाऽर्थात् वित्तेन साहाय्यं करोति। कस्मैश्चिन्निर्धनछात्राय शुल्कद्रव्यम् अन्येभ्यः पुस्तकानि, पुस्तिकाः, अपरेभ्यो यथोचितं वस्त्रं च प्रददाति। क्वचिन्मन्दिरनिर्माणे धनेन प्रस्तुतो भवति। कस्यचिद् दीनस्योटजनिर्माणे वित्तं प्रस्तौति। कस्याचिद्रुग्णजनस्य न केवलमौषधिनाऽपितु फलैः पथ्यादिद्रव्यैस्सदा सपर्यां करोति। नगरोपकण्ठे एकस्मिन् ग्रामे जर्जरविद्यालयभवनस्य जीर्णोद्धारः कारितः। छात्राणां कृते जलव्यवस्थापनाय कूपः खानितः। तत्र ग्रामसभाभूमौ वृक्षारोपणं कारितम्। पर्यावरणरक्षायै प्रदूषणनिवारणाय च महतोत्साहेन स चक्रवालः सर्वात्मना समर्पितोऽस्ति। एकस्मिन् ग्रामे एको युवजनो मल्लकलाप्रवीणः साधनाभावे कमप्युत्कर्षं कर्तुं न समर्थः। यथाकथञ्चिच्चक्रवाल इदं पीडाकरं व्रीडाकरं च वृत्तं ज्ञातवान्। स तत्र गत्वा तं मल्लं प्रोत्साहितवान् सर्वसौविध्यप्रदानेन। इदानीं स मल्लो न केवलं कुटुम्बस्य ग्रामस्य प्रदेशस्य वाऽपितु डॉ० चक्रवालस्य नामापि यशसोज्ज्वलं करोति। एवमेव चक्रवालः स्वकीय-वेतनस्य सदुपयोगं करोति जनानां कल्याणार्थम्। स्वयं तु अत्यन्तं सरलं जीवनं यापयति विपन्न इव।

डॉ. चक्रवालो मदीयान्तरङ्गमित्रम्। एकदा मया जिज्ञासिते तस्य नयने स्वबाल्यकालं स्मृत्वा सजले सञ्जाते। सोऽब्रवीत्- ''मित्रवर्य! अतिनिर्धन-कुले मम जन्म। सुखं किं भवतीत्यहं युवावस्थापर्यन्तं नैव विज्ञातवान्। अभावग्रस्तानां का दुर्दशा भवतीति मां विहाय को विज्ञातुमर्हति। पिता मम पोषणं याचकवृत्त्याऽकरोत्। दैवानुकम्पयाऽहं पठने प्रवीणः कुशाग्रबुद्धिश्च। अतः प्राथमिकपाठशालाया मम गुरवो मह्यमतीव स्निह्यन्ति स्म। ते शुल्कधनं, पुस्तकानि, लेखनवस्तूनि वस्त्राणि च महता स्नेहेन स्वयं परस्परमभिमन्त्र्य

ददति स्म। माता गोसेवयाऽपि किमप्युपार्जयति स्म। प्रात:कालिकं दुग्धं कुटुम्बाय प्रयोक्तुं संरक्ष्य सायंकालिकं दुग्धं विक्रीणाति स्म। गोसेवैव ममाभ्युन्नतिमूलम्। मया यानि कष्टान्यनुभूतानि तान्यन्ये मेति। क्रियमाणं मत्सेवाकर्म त्विदानीं केवलं सहानुभूतिप्रदर्शनम्। अन्यत्किमपि कर्तुं मम किं सामर्थ्यम्?''

तन्नेत्रयो: नेत्रे सम्मेल्य मया केवलमिदमुक्तम्- ''भवन्तु नाम कृपणाः त्वत्समा अन्येऽपि।''

**वदान्यः कृपणः कश्चित् कथायां कल्पितो मया।**
**जहौ स्वार्थं परार्थाय यथा साहित्यलक्षणा।।१।।**
**आदर्शा गुरवः सन्तु छात्राणां परमेष्ठिनः।**
**तथाविधः समाजोऽपि शुद्धा देशस्य संततिः।।२।।**
**चक्रवालनिभः कोऽपि सदाचारपरायणः।**
**आविर्भवतु कालेऽस्मिन् समेषां मार्गदर्शकः।।३।।**
**कथायां ग्रथितं वस्तु यथार्थं परिकल्पितुम्।**
**समायान्तु युवानोऽग्रे सफला स्यात् फलश्रुतिः।।४।।**

●

## कुक्कुरस्य भाग्यम्

तदानीं निदाघस्य महान् भीषणस्तापो जनयति स्म जनानां सुमहत्सन्तापम्। जयपुरस्थगान्धीनगरमिति रेलवेस्थानकस्य मुख्यद्वारमतिक्रम्य गते प्रथमेऽवतरणपटले द्वारस्य पुरस्तादेवोर्ध्वलम्बमानं विद्युद्व्यजनयन्त्रं सवेगं चक्रभ्रमिविधिना प्रचलति स्म। तस्य व्यजनयन्त्रस्य सर्वथाऽधस्तादेकः शबलसारमेयः पादान् प्रसार्य सुखं शेते स्म। समागतायामप्यपराह्णवेलायां पश्चिमगामिनोऽपि तीक्ष्णातपविकिरतः प्रचण्डसूर्यस्य ज्वलज्ज्वालाजटालनिभैः किरणैः समुद्वेजिता भृशं सन्तप्ता अविरतनिःस्यन्दमानस्वेदबहलक्लिन्नदेहाः क्लान्तमुखा यात्रिणः तत्स्थलमविदूरमपि पवनपूरं सस्पृहं दर्शं दर्शमपि तत्र गन्तुं न शक्नुवन्ति। नैतस्मिन् कारणमासीज्जीवदया नापि प्राणिमात्रं प्रति सहानुभूतिरपितु तस्मात्कुक्कुराद् भीतिः। सर्व एव जनः सामान्यतः कुक्कुराद् बिभेति। यात्रिणां तत्र भवनचेष्टाभिः सुखशयनविघ्नवशात्समुच्छिन्ननिद्रः खिन्नश्चोद्विग्नः स ग्रामसिंहः कमाक्रम्य तं स्वदन्तनखानां लक्ष्यं कुर्यादिति को जानाति? स कुक्कुरोऽपि नैव। अतएव सर्वे तत्र तापसाः तापसङ्कटापन्ना अपि तत्कुक्कुरसङ्कटामन्त्रणं नामावाप्तुं नोत्सहन्ते स्म।

एतस्मिन्नन्तरे कश्चिदधिकारवेत्रदण्डहस्तो रक्षिपुरुष इतस्ततो भ्रमर इव भ्रमन् तत्र समायातः। तं वेत्रदण्डं करेण कलयता तेन रक्षिपुरुषेण तथावस्थः सुखनिद्रः स सारमेयो दृष्टः। अद्य प्रातःकालादेव निष्फलारम्भनियोगो विफलसर्वप्रयोगो रिक्तपुटकः शुष्ककरपल्लवोऽतोऽन्तर्दाहपीडितः किञ्चिदन्यत्कर्तु-मीरितः स रक्षिपुरुषो निर्भयं तथाभूतं तं वीक्ष्य सहसा विस्फुरितक्रोधानलस्य

साक्षाद् विग्रह इव प्रतीतः प्रसुप्तं तं सरमासुतं तेनैव वेत्रदण्डेन क्रूरं ताडयामास। सोऽप्युच्चैराक्रन्द्य सहसोत्प्लुत्य ततो विनष्टः। विजयमुद्रया चमत्कृतनेत्राभ्यां निभाल्य यात्रिसम्मर्दं स रक्षिपुरुषः कुक्कुरसेवितं तत्स्थानमधिचकार। शनैश्शनैस्तद्व्यजनयन्त्रपवनसेवनाय हीषत्त्राणलोभात् तत्रान्येऽपि यात्रिण उपसृत्य पुञ्जीभूता बभूवुः।

मरुधरनाम्नीं यां रेलपथगामिनीं प्रतीक्षमाणा यात्रिणस्तत्रावतरणपटले सम्मर्दभूता आसन् सा रेलगन्त्री क्षणात्क्षणं विलम्बमाना प्रतीयते। प्रथमं तस्या आगमनं होरामितं विलम्बितमित्युघोषितमासीत् परन्तु सा कया गत्या केन च विधिना सर्पति प्रचलति धावति वा, कदा कुत्र कियत्कालमकालं विरमति, तस्याः सञ्चलने का बाधा समापतति यतो हि सा पुनः सार्धहोरं ततश्च होराद्वयमितं कालं ग्रहीष्यतीति श्रावं श्रावं कर्णे खर्जनं सञ्जातम्। किमपि प्रमाणमाधारीकृत्य अथवा केवलमनुमानबलादेव रेलशकटीसञ्चरणसूचना घुष्यते तैरधिकारिजनैः किम्? परिचालनविषये यदि नियतकालस्य परिपालनं भवेत्तदा सर्वं सुखकरं स्यात्। रेलवेविभागस्यार्थहानिरपि न जायेत। किन्तु देश एवास्माकमीश्वराश्रयतः प्रतिदिनं प्रतियाति का कथा रेलविभागस्य! एवं नानाविचारवीथीषु भ्रमता मयाऽवलोकितः सैव सारमेयः पुनस्तत्रोपस्थितः। लोके कथितं प्रथितमेव- "कुक्कुरस्ताडनपीडामचिरमेव विस्मरती"ति। निजपुच्छेन स्थानमार्जनं कृत्वोपविष्टः सन् मुखाद् बहिर्लम्बायमानां जिह्वां निःसार्य प्रश्वसन् तत्र क्षणं तस्थौ। ततश्च पुनरपि स्वाभिमतं किमपि सुखदं निर्विघ्नं स्थानमन्विष्यमाणः क्वचित्कोणे गत्वा प्रतिनिवृत्तः।

तदैवैकमद्भुतं दृश्यं सर्वेषां समक्षं घटितम्। एको बालकः 'समोसा' इति खाद्यवस्तु क्रीत्वा तदन्वितं पत्रपुटकं करे कृत्वा प्रसन्नमनाः स्वपित्रा सह इत एवायाति स्म। तत्रैकस्य स्तम्भस्योपरि छादनान्तरे निभृतं संश्लिष्य तूष्णीं स्थितः प्लवङ्गः सहसैव चमत्कृतझम्पावेगेन निपत्य बालकस्य हस्तात् खाद्यवस्तु बलाद् ग्रहीतुमियेष। परन्तु तस्याघातभीतस्य बालकस्य कम्पितकराभ्यां सपत्रपुटकं समोसाद्वयं भूमौ पपात। चकितचकितैर्जनैर्यावत्स कपिपोतकः तर्जनहुङ्कारैर्दूरीकृतस्तावदेव स कुक्कुरः सरभसं तद्वस्तु स्वमुखे कर्तुकामो दुर्बलैरपि पादैः यथाशक्ति धावमानः समदृश्यत्। तत्खाद्यवस्तु यत्रापतत् तत्रैव दारिद्र्यस्य साक्षान्मूर्तिरिव, परिमितातिमलिनविदीर्णतन्तुपटावृतास्थिपञ्जर इव, धृताकारो दौर्भाग्यावतार इव, दैववज्राहतध्वस्तनवनिर्मितगृहकलेवरस्य

पृष्ठोदरयोरेकीकृततनुप्राकार इवैको बालभिक्षुको दग्धकाकिणीनिभे अक्षिणी विस्फार्य सस्पृहं तदखाद्यमपि खाद्यवस्तु तडिच्चमत्कृतिविधिना सन्निपत्य शुष्कपल्लवविटपेनेव दक्षिणहस्तेन सत्वरमादाय मलिनदशनभवनमुखविवरे बलादकरोत्। दूरस्थेनावसरभ्रष्टेन वानरशावकेन, निष्फलयत्नेन तेन करुणपशुना शुना समं सर्वैरपि यात्रिवर्गैर्दृश्यमेतत् सानुशयं सविस्मयं सस्मयञ्च वीक्षितम्। अहं तु तां भाग्यदेवतां ताञ्च देवीमाराध्यां जिजीविषां स्मारं स्मारं लोमहर्षकेणानेन करुणघटितेन भृशं द्रवितो गत्वा च तमन्तिकं क्षीणकायं मालिन्यदुर्गन्धनिकायं बालभिक्षुकं दुर्दशां च तस्य कुपोषणजन्यां बुभुक्षावेदनामप्यनन्यामनुभूय तस्य करे दशरुप्यकमकुर्वम्। कैश्चिदन्यैरपि सकलसुखहीनः प्रारब्धफलभोगलीनः स दीनः दुर्दैवेनैवमपकृतस्तैर्जनैः किञ्चिदुपकृतः।

प्रायः सर्वेषु सार्वजनिकसङ्कुलस्थलेषु सन्ति स्थापितानि भारतोलनयन्त्राणि। अत्राप्यस्त्येव समक्षमेकं स्तम्भसमवर्ति भारतोलनयन्त्रम्। तस्याधारफलकमारुह्य विनिर्मितोपरिनियतविवरे निर्धारितां रुप्यकमूल्यमुद्रां यदि कश्चिद् वर्णचक्रे स्थगिते सति निक्षिपति तदा क्षणमात्रेणैव तस्य भारो मुद्रितो भूत्वा त्रिकटरूपेण ततो विनिस्सरति। तस्मिन् त्रिकटपत्रपृष्ठे तुलितजनस्य भाग्यमपि मुद्रितं दृश्यते। अनेन विधिना यन्त्रमिदं कस्यचिदपि जनस्य भारेण सह भाग्यमपि भाषते। तन्मुद्रितो भाग्यफलादेशः कियत्सत्यं भवतीति तस्य भाग्यमेव जानाति। मन्ये, तस्य स्थानस्य सौन्दर्यं त्ववश्यमेव तस्य तोलनयन्त्रस्य प्रकाशद्युतिचाकचिक्येनाभिवर्धते यन्त्रञ्च जनान् विशेषतः कुतूहलपरान् बालानाकर्षयति।

तत्र स्थापितं तत्तोलनयन्त्रं तदानीं रिक्तमेवासीत्। अतः स सारमेयः तस्याधारभूतमधोविन्यस्तं लघुचत्वरमनायासमेव समारुह्य तस्थौ। तत्रस्थस्य कुक्कुरस्य काऽप्यभिख्याऽऽसीत्। मन्ये, स विविधवर्णरत्नजटितसिंहासनगतः कश्चिदपूर्वो राजा इति विराजते स्म। कुण्डलीकृतं पुच्छमध्यास्य, अग्रपादाभ्यां समुच्छ्रितग्रीवाभङ्गाभिराम ऊर्ध्वोत्थितस्तब्धकर्णः स सन्नद्धशासकच्छबिं प्रस्तौति स्म। तोलनयन्त्रचत्वाराधिरूढं तं सारमेयं पश्यन्ति स्म जनाः सकौतुकम्। तदानीं तस्योपवेशभङ्गी त्वनिर्वचनीयैवासीत्। स ग्रामसिंहो राजसिंह इव प्रतिभाति स्म। मन्ये, स भैरवादिष्टः शासनाधिकारसम्पन्नः पशुपुरुषः स्वर्गाच्च्युतो धर्मराजयुधिष्ठिरस्य मार्गबन्धुरिव, विफलीकृतैकलव्यबाणवेधः पाण्डवानां श्वा इव, दत्तात्रेयाविष्कृतगुरुपरम्पराधिष्ठितोपदेशक इव, शौर्यस्य मूर्तविग्रह

इव, वीररसस्यालम्बनविभाव इव, स्वामिभक्तेः कृतबहिरवस्थानो भाव इव, पीडाकुलितदीनजनस्याभिव्यक्तो ध्वनिरिव, भवानीपतिभक्तभैरवस्य द्वारपाल इव वीरासनगतः, अग्रपादद्वयोत्थितस्थिरपूर्वकायः, निरातङ्कोऽपि सातङ्कः, अभयभावं प्रदर्शयन्नपि सभयः, अनाश्वस्तोऽप्याश्वस्तः कियत्कालं यावदस्यामेवावस्थायां स्थित्वा पुनस्तत्र शयनमुद्रां विधाय नेत्रे निमील्य विस्रब्धतां जगाम। एतत्सारमेयेतिवृत्तरूपकं प्रेक्षमाणेन केनचित्स्वभावसुलभचपलेन बालकेन स्वीया जननी नोदिता- ''मातर्देहि मे रुप्यकमेकमि''ति। सा तु- ''किं करिष्यसि?''- इत्युक्त्वा तं तर्जितवती। तस्याः शाटिकाञ्चलं गृहीत्वा यदा स वारं वारं बालहठमारब्धवान् तदा तस्य जनकस्तस्मै रुप्यकमेकं प्रायच्छदपृच्छच्च- ''वत्स! किमपि क्रेतुमिच्छसि?''

''नहि, पश्य; एकं कौतुकं करिष्यामी''ति।

स बालकस्तां धातुमुद्रां करे कृत्वा शनैश्शनैः निभृतपादक्षेपैः तद्भारतोलनयन्त्रस्यान्तिकं गत्वा, अधस्तादेव तस्मिन् यन्त्रविवरे तां रुप्यकमुद्रां विससर्ज। क्षणमात्रेणैव मुद्रितं त्रिकटपत्रं ततो बहिरायातम्। स त्रिकटपत्रमादाय सस्मितं सोत्साहं सोल्लासं सकौतुकं पठितवान् भारमङ्कितं तत्र त्रिंशत् किलोमात्रम्। पुनस्तस्य कुक्कुरस्य भाग्यम्? तत्र समवेताः सर्वे यात्रिजनाः सविस्मयं सहासं सोत्कण्ठञ्च बालकस्येमां कौतुकक्रीडां निभालयन्ति स्म। तदानीं मम मनस्येवमासीत्- ''अहो! बालस्य चपलचातुर्यम्!! अस्त्येव महती सम्भावनामयी प्रतिभा प्रारब्धपुण्यार्जिता पूर्वजन्मसुकृतसञ्चिता बालकेऽस्मिन् भगवत्कृपया विशदीकृता विराजतेऽधुना। यादृशी मनोरञ्जनी चित्ताह्लादकारिणी कल्पना नाविष्कृताऽस्माभिः, सा त्वनेन लघुवयसा बालकेन समाचरिता। समुचितं संरक्षणं दिङ्निर्देशनं समवाप्य नूनमेवायं बालको भविष्यति महान् रचनाकारो वैज्ञानिको वा। कल्पनाशीलस्यास्य बालकस्य भाविजीवनं समुज्ज्वलं समुन्नतञ्च भवितेति नास्त्यत्र कश्चित्सन्देहलेशः।'' इत्थं विचारयता मयाऽनुभूतं जनानामौत्सुक्यं श्रोतुं तस्य कुक्कुरस्य भाग्यलेखं यन्त्रबलात्प्रकटितम्।

एकवारं पुनर्मया तत्रस्थे तस्मिन् कुक्कुरे दृष्टिपातः कृतः। स तु शयनमुद्रां विहाय पुनः पूर्वावस्थायां सुस्थित आसीत्। सहसा मक्षिकाभिरुद्वेजितः स कर्णौ पुच्छञ्च परिचाल्य बुक्काध्वनिं सरोषं विधाय शान्तो बभूव। किन्तु तस्यानया क्रियया स पुनरपि समेषां दृष्टिविषयोऽभवत्। तदानीं सोऽप्यवसरोपलब्धराजपदमदगर्वितजननायक इव, ऊर्ध्वपादहीनशरभ इव, विधिविडम्बित-

द्विद्रूपकरभ इव, जृम्भाविजृम्भमाणमुखः, ईषन्निमीलितनयनाभ्यां किमपि सूक्ष्मं निरीक्षमाणः, सबलघ्राणः, लघ्वश्वपोतप्रमाणः, करालकालोष्मपीडितो दीर्घतरश्वासप्रश्वासौ क्रियमाणः, वेदनातुरोऽपि धैर्यं ध्रियमाणः, नितान्तशान्तोऽनभिज्ञेयभावः सर्वातिरिक्तानुभावः, तिरस्कृतश्ववृत्तिविभावः, स्वीकृतनियतिनियतस्वभावः, तत्कालविगलितदण्डाघातप्रभावस्तत्र रेलयानप्रतीक्षारतानामनारतदुःसहव्यथाविह्वलविकृताननानां नानास्थानपथागतानां धैर्यधनानां जनानां मनोविनोदस्य निर्मूल्यं साधनं संबभूव।

अथ तनयहस्तात् तत्त्रिकटवत्पत्रखण्डं स्वकरे कृत्वा बालकस्य पिता प्रथमं मौनमेव तं मुद्रितं भाग्यलेखं पठित्वा साट्टहासं जहास। लेखाभिप्रायमनुमातुं स्व-स्वबुद्धिवैभवबलात्प्रयासरतैः कुतूहलपरैः तथाच तं हसन्तं दृष्ट्वा हसद्भिर्यात्रिभिः- ''स्फुटमुच्चार्य पठतु भवान्, वयमपि श्रोतुमिच्छामः, कथमेकाक्येवानन्दमनुभवति, भवतु सहभागित्वमि''ति साग्रहं सम्बोधितः स एकतस्तां भाग्यलेखपंक्तिमपरतस्तथा स्थितं तं कुक्कुरं दर्शं दर्शं स्मितविकसितमुखेन तत्र लिखितं कुक्कुरस्य भाग्यं सर्वसमक्षमेवं पठितवान्- ''श्रीमतो विवाहस्य योगो वर्षाभ्यन्तर एव। सम्बन्धनिर्णये सुविचारोऽपेक्ष्यते।'' एवं कुक्कुरस्य भाग्यं विज्ञाय सर्वे सुनिर्भरं सोदरवेदनं जहासुः॥

**भाग्यं भवति सर्वस्य नात्र कश्चिद् हि संशयः।**
**सर्वपिण्डसमापन्नं भाग्यं फलति सर्वदा॥१॥**
**भाग्यफलं मनुष्येषु सर्वैरप्यनुभूयते।**
**जङ्गमानां कथा कैव स्थावरेष्वपि दृश्यते॥२॥**
**यन्त्रे तु सम्भृतं भाग्यं निर्गतं पूर्वमुद्रितम्।**
**भाग्येन कुक्कुरस्यैव, किं तद्भाग्यं न यत्फलम्॥३॥**
**कुक्कुरस्य कथा येयं भवता भाग्यसम्भृता।**
**पठिताऽथ श्रुताऽपूर्वा सत्यवृत्तसमाश्रिता॥४॥**
**हास्याय केवलं भाग्यं निर्गतं भारसंश्रितम्।**
**शेषं सर्वन्तुलोकेऽस्मिन् सर्वदैवानुभूयते॥५॥**
**भाग्यं ददाति सर्वेभ्यः कथेयं भावभूषिता।**
**भाग्यमेव भवेत्तस्य यः पठेच्छृणुयादपि॥६॥**

●

## ब्रह्मचारी

"अये ब्रह्मचारिन्! क्व यासि?" समक्षमापतन्तं बालसखं ब्रह्मचारिणं सुष्ठु निर्वर्ण्य मया ससंभ्रमं पृष्टम्।

"एवमेव, आपणं प्रति गच्छामि।" अपरिचितेनेव सहजतया ब्रह्मचारिणा प्रोक्तम्।

"अस्ति कश्चिद्विशेषः?"

"नहि, नहि; एवमेव।" सस्मितेन तेनोक्तम्।

"मया ते मुखभावः पठितः। मन्ये, मनसि किञ्चिद् धृत्वा बहिर्गतेन कण्ठेनैवं भणसि। बहुकालानन्तरं त्वामत्र नगरे दृष्ट्वा मे विस्मयः। अपि च, त्वमापणं गच्छसि! इत्येव महत्कुतूहलस्य विषयः।"

"किमहमापणं गन्तुं नार्हामि?"

"कथन्नु? सर्वथाऽर्हसि। तत्र का बाधा? किन्तु, सत्यं ब्रूहि; अस्ति ते सहजा वृत्तिरापणगमनम्?"

ममानेन प्रश्नेन तस्य जिह्वा निरुद्धा। पुनस्तस्यानने मन्दस्मितं समुद्गतम्। अवसरो लब्धः। द्विगुणितोत्साहेन मया पृष्टम्- "ब्रूहि, ब्रूहि; को विशेषः?" प्रश्नेन सममेव मम दृष्टिस्तन्मुखासक्ता बभूव। मनस्येवमासीत्- 'नायं ब्रह्मचारी कदाप्यस्यां वेलायां गच्छत्यापणम्'। अस्त्येव किञ्चिद्रहस्यम्। वर्तत अयं स्वाध्यायकालोऽस्य। अहमिमं सम्यग् जानामि। स्वाध्यायकाले

ब्रह्मणाऽप्याहूतो नैव गच्छति। घृतकुम्भभङ्गेऽपि तत्र मनाग् दृष्टिं न ददाति, अमृतफलं दृष्ट्वाऽप्यासनं न त्यजति। किं कारणमत्र! यदयं त्वरितपद आपणे विचरति? यद्येतद्रहस्यभेदनं स्यान्मन्ये, एवरेस्टशिखरारोहणफलं लब्धं स्यात्। यावदहमेतद्विचारयामि, तावत्स तेनैव स्मितेन, "काले ज्ञास्यसि" इत्युक्त्वा सत्वरं प्राचलत्।

तस्यानेन व्यवहारेणाहं तु सहसाऽऽकाशात्पतित एव। स्तब्ध इव, मुग्ध इव, लुण्ठित इवाहं तत्र तावत्तथैव विवृतमुख आसं यावत्स मम दृष्टिपथाल्लुप्तो न जातः। बहुकालाद्दृष्ट एष विलक्षणं किमपि रहस्यमुद्घाटयिष्यतीति मे मनसि मोदकभञ्जनमोदः प्रादुरासीत् किन्त्वनुत्तरः सोऽनुदारः कृतहृदयविदारः प्रभञ्जन इव यथाऽऽयातस्तथैव गतोऽपि। कथं स मामनादृत्य गतवान्? किमस्ति तद्रहस्यमित्येवंविधा नैके प्रश्ना मम चेतसि जले वीचिविवर्ता इव भ्रमिमुत्पादयामासुः। ब्रह्मचारिणस्तथाविधेनाकल्पितेन व्यवहारेण मनसि खिन्नता गृहेऽनाहूतातिथिरिव स्वतः प्रविष्टा। गृहात्किमुद्दिश्य निर्गतोऽस्मीत्येतदपि विस्मृतम्। साक्रोशं मे मनस्तदानीं तं ब्रह्मचारिणं किं किं न कृतवान्? यायावरमेघ इव मे पादौ शिवालयं प्रत्यनायासमेव प्रवृत्तौ। अस्मिन् शिवालये नैकवारं मयाऽचिन्त्यमहिमोज्ज्वलत्प्रतापनिरस्तभवसन्तापः शिवः पूजितः। तत्र गत्वा भगवन्तं पार्वतीपतिं प्रणम्य प्रदक्षिणाञ्च विधाय मन्दिराजिरस्यैकस्मिन् प्रान्ते प्रस्तरफलके समुपविश्य केवलं कण्ठेनास्फुटं षडक्षरं मन्त्रं जपन्नपि मनसा ब्रह्मचारिणस्तद्वर्तनमेव स्मरामि। अस्त्येष ब्रह्मचारी मम सहाध्यायी सतीर्थः सखा। आसीत्तदानीमावयोर्दन्तैककृन्तरोटिकामैत्री। वस्तुतस्तस्य नामधेयमस्ति राममिलनमिश्रः। धर्मनिखातस्य पौरोहित्यकर्मनिष्णातस्य तस्य तातस्य महतीच्छाऽऽसीत्स्वपुत्रं तादृशं सदाचारवन्तं महान्तं पुरुषं निर्मातुं यं लोका अनुसरन्तु। शास्त्रविधिना कृतविद्यारम्भेन तेन सहैव ममापि विद्यालयप्रवेशोऽभूत्। यदाऽऽवां मध्यमाकक्षायां पठन्तावास्व, दुर्दैवात्तस्य जनकः परलोकं जगाम। अनन्यस्तनयस्तस्यायं ब्रह्मचारी छात्रोऽनाथो जातः। परिवारे तस्य नासीत्कोऽपि सदस्योऽवशिष्टः। केवलं दूरस्थो मातुलः सोऽपि दीनो दारिद्र्यलीनो जले शुष्कप्राये मीन इव जीवलोके जीवति। दुर्दैवविपाकमिमं कथञ्चिच्छ्रुत्वा सोऽप्यागत्य केवलं भागिनेयस्य ब्रह्मचारिणो मुखं दर्शं दर्शं विलपति स्म। दिनकतिपयानन्तरं सोऽपि प्रतिनिवृत्तः।

ब्रह्मचारी राममिलनमिश्रः प्रज्ञावान् धीरः सौम्यो मेधावी आसीदन्तेवासी।

स पित्रा प्रसाधितं तमेव ब्रह्मचारिवेशं समाचरति। मुण्डिते शिरसि पुञ्जीकृता शिखा, शशिशकलनिभे भाले ललितकलिता ललाटिका, श्वेतमुत्तरीयं दुकूलमधोवस्त्रञ्चेत्यनेन वेशेण स सविशेषमुल्लसति। अद्यापि तदेव स्मितं स एव वेशः। केवलं कञ्चुकमुष्णीषञ्च विशिष्टेऽतिरिक्ते समालक्षिते। यद्यपि तदानीं सर्वे सहपाठिनो ब्रह्मचर्यमेवाचरन्ति स्म किन्तु केवलं राममिलनमिश्र एवैषा संज्ञा रूढाऽभवत्।

एकदा मया स पृष्टः- "सखे! नैष्ठिकं ब्रह्मचर्यं चरिष्यसि उत वा काञ्चित् सुलक्षणां कन्यां परिणीय गृहस्थाश्रममपि धन्यतां नेष्यसि?" स्मिताननः सोऽब्रवीत्- "तुभ्यं किं रोचते?" मयोक्तम्- "मम पितरावत्र प्रमाणम्।" ततः स प्रोवाच- "मम स्थितिस्तु भिन्नैव। अस्मिन् विषये प्रायः स्वत एव तर्कयामि किन्तु निश्चेतुं न शक्नोमि। कदाचिन्मनस्यायाति नैष्ठिकं ब्रह्मचर्यमेव वरम्। किन्त्वपर एव क्षणे विचारयामि यदधमो भवत्यधमर्णः विवाहं विना ऋणत्रयान्निष्कृतिः कथं भवेत्? अपिण्डकाः पितरा अश्रूणि पिबन्ति। अपि च, सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे। अतो वंशप्रतिष्ठायै सन्ततेः सातत्यं विधातव्यम्। अन्ततः किं भविष्यतीति वक्तुं न पारयामि।" मयोक्तम्- "सखे! भगवता मनुना गार्हस्थ्यस्यैव श्रेष्ठत्वं प्रतिपादितम्।"

यस्मिन् विद्यालये आवां पठावः स्मः, स स्नातकस्तरीय एवासीत्। शास्त्रिपरीक्षामुत्तीर्याऽग्रेऽध्ययनार्थं कुत्र प्रवेशः साधनीय इत्यविचार्यैव ग्रीष्मावकाशेऽहं स्वगृहं स च मातुलगृहं गतवन्तौ। ततः प्रभृत्यलब्धवार्तोऽयं प्रायेण दशवर्षानन्तरमेवमत्र मेघे विद्युल्लतेव दृष्टो प्रणष्टश्च। एवमनुचिन्तयता मन्ये होरामितः कालो व्यतीतः। मम बालसखा स ब्रह्मचारी कुतोऽत्र कदा कथं चागतः किमत्र करोतीति सर्वं विज्ञातुमनिर्वचनीयोत्कण्ठा समजायत। कथं सोऽन्वेष्टव्य इति खिन्नमनसा यावदितस्ततो दृष्टिं निक्षिपामि तावत्सहसो-पनतभाग्यफलमिव, याचकस्यायाचितं पूर्णपात्रमिव, घनान्धकारे ज्योतिरिव, तृषार्तस्याकण्ठजलपानमिव स ब्रह्मचारी शिवालयगर्भगृहानिःसरन् दृष्टिपथे प्रतीतः। नेत्रे प्रमृज्य पुनरपि यावदवलोकयामि तावत्स एवास्तीति विनिश्चित्याहं सहसोत्थाय तमुपसृत्य हस्ते गृह्णामि। सोऽपि विस्मितः ईषद्विहस्य कण्ठेनाश्लिष्य तस्थौ। अलीकं क्रोधं प्रदर्शयता मयोक्तं- "तदानीं कथं सहसैवापसृतवानसि?" "आसीत्तदानीं किमपि सङ्कटम्। इदानीन्तु कुशलमवेहि। आगामिनि दिवसे

भवान् पितृव्यो भविष्यती''ति मां सम्बोध्य स निर्भरं जहास।

अथ स मामेकं प्रसूतिसदनं नीतवान्। तत्रैकस्मिन् विशिष्टे कक्षे गर्भभारालसामेकां केतकीपुष्पदलपाण्डुरामर्धनिमीलिताक्षीं नवयुवतीं 'सैषा मेऽन्तर्वत्नी जाये'ति सङ्केतेनैव दर्शयामास। ततो बहिरागत्य मृदुशाद्वलास्तरणे स्थण्डिले समुपविश्य स्वीयमुत्तरवर्तिनमात्मवृत्तान्तं, यस्यार्थं मे महती उत्कण्ठाऽऽसीत्, श्रावयामास-

''मातुलस्यैकः सम्बन्धी वादोदराविश्वविद्यालये प्राध्यापकस्तदानीं ग्राम आगतः। स मम प्रतिभां परीक्ष्य, कक्षासु सर्वोच्चान् प्राप्ताङ्कान् निरीक्ष्य मम प्रवेशः स्वीये विश्वविद्यालये एम.ए. इति कक्षायां कारयामास। तत्रापि प्रथमं स्थानमवाप्य तवायं मित्रमेकेनैव प्रयासेन भारतीयप्राशासनिकसेवायां चयनितः प्रतापपुरस्य नगराधिकारी नियुक्तः। एकदा तन्नगरमुभयतः प्रवहमानायां नद्यां निर्माणाधीनं घट्टमवलोकयन्नदीतीरे पर्यटन् सहसैकां नवयुवतीं नद्यां प्रविश्यमानामपश्यम्। तामनभीष्टसाहसवतीमनुभूय ममानुचरा यावद् हाहाकारं कुर्वन्ति तावदुत्प्लुत्याहं जले प्रविश्य जलसमाधये त्वरमाणां तां समुद्धृत्य वाहने कृत्वा निजावासमानीतवान्। तामाश्वास्य पृष्टे सति तस्या अश्रुक्लिन्नाननायाः करुणकथया मे हृदयं वेपते स्म। भौतिकचाकचक्यं कं न प्रदूषयति? स्नातकोत्तरस्तरीया नलिनी नाम्नीयं छात्रा कस्यचिन्नवरयीशछात्रस्य प्रेमपाशे पतितेदानीं मासात्मकं गर्भं धारयति। स क्रूरतया भ्रूणध्वंसनायैतां नोदयति, इयन्त्वसहमता। अन्ततो लोकलज्जाभीत्या मृत्युमालिङ्गितुमेतादृशं साहसं क्रियमाणा सैषा मया समुद्धृत्य रक्षिता। पूर्णे सति गर्भे, तस्याः सुखप्रसवाय गृहीतावकाशोऽहमत्रागत्य नगरेऽस्मिन् विश्रुतविशिष्टप्रसूतिसदने तां निवेशयामास। सखे! अहमिदानीमपि ब्रह्मचारी किन्तु तस्मै गर्भस्थशिशवे केवलमात्मनाम ददामि।।''

**यः शृणोति कथामेतामद्भुतां लोकसंश्रिताम्।**
**ब्रह्मचारिपदं नित्यं स सदैव समीहते।।१।।**
**कन्या या नलिनी नाम्नी स्वेच्छाचाराद्धि गर्हिता।**
**प्राणान् त्यक्तुं गता नद्यां रक्षिता ब्रह्मचारिणा।।२।।**
**शाकुन्तलमनुस्मृत्य पठित्वा च कथामिमाम्।**
**मा पतेद्युवती काचित्पाशे प्रणयदुष्कृताम्।।३।।**

●

## श्रमो विजयते

तमहं वारं वारं निभालयामि। स कुमारो वयसा सुकुमारोऽपि महता मनोयोगेन स्वनियोगे निरतोऽस्ति। सर्वकारेण प्रायोजितायां 'सूखा-राहत' इति योजनायां ग्राममार्गनिर्माणे स खनित्रेण पृथिवीं विखनति स्म। तस्य श्रमं स्वेदक्लिन्नञ्च शरीरं दर्शं-दर्शं क्रीडोचितं वयश्च समीक्ष्य मम मनस्येवमभूत्- "अहो क्वेदं वयः क्व चायं श्रमः? यस्मिन्तु दिनानि क्रीडाविनोदे, मातापितृनयनासेचनेऽध्ययने वा यान्ति तस्मिन्नेव वयसि कथमयं कुमारः कृतकालक्रूरप्रहारः पतितविधिविचित्रव्यापारः सुनिर्दयनियति-नियतकर्मप्रकारः परिवेष्टितदुर्दिनप्राकारः सुकठिनश्रममयं कर्म कर्तुं विवशोऽस्ति? मन्ये, पूर्वजन्मनि कृतस्य कस्यचिदपराधस्य दुर्विपाकोऽयम्। किन्तु नाहं पश्यामि तस्यानने कमपि खेदविकारम्। अपि च, नालक्ष्यत एष कर्मचौरोऽन्य इव।"

एवं विचिन्तयति मयि सहानुभूतिमयी करुणा कृतपदा मां नोदितवती तं कुमारमाकार्य किमपि प्रष्टुम्। किं किं न कारयति जिज्ञासितं मनः! चेतस्तु तद्विषयानुरक्तम्। तस्मिन् काले श्रमात्तं विरतं विधाय प्रश्नो न करणीय इत्यौचित्यधिया मया स तदाऽऽहूतो यदा मध्याह्नविश्रामवेलायां श्रमिकाः सावकाशा गृहादानीतं खाद्यादिकमुपभुज्य क्वचिदासीनाः शयाना वाऽऽसन्। आहूते सति मया स भीत इव नताननः शनैश्शनैः कृतपादप्रचारो ममान्तिकमागत्य मन्मुखासक्तदृष्टिस्तूष्णीं तस्थौ। तदानीं तस्य मनसि किमासीदित्यहं न जाने किन्तु तथाविधं तमायान्तं दृष्ट्वा मम हृदयं

सकरुणं बभूव। ''उपविश'' इत्युक्त्वा स्नेहेन तस्य शिरसि करं कृत्वा, ''के के सन्ति तव कुटुम्बे'' इत्यपृच्छम्। ममेमं प्रश्नं श्रुत्वा स निर्भरं जहास। ''कथमेवं हससि?'' इत्यतः सहसैव स मौनमालम्ब्य ततो मन्दस्मितेन प्रोवाच— ''हसनं मे स्वभावः। क्षम्यताम्। पितरौ, भगिनी, लघुभ्राता च मामतिरिच्य कुटुम्बे। एका सवत्सा गौः, एकः कुक्कुरश्चे''त्युक्त्वा पुनः जहास। तस्य हास्यविच्छित्तिस्तु विलक्षणैव मह्यं रोचते स्म। अनायासमहमपि तेनैव सह हासपरो जातः। आवयोरेवंविधेन हासेन समुत्सुकाः कुतूहलिनोऽन्ये केचन श्रमिकाः समागताः। तेष्वेको मां सम्बोध्य न्यवादीत्— ''श्रीमन्! सौम्योऽयं बालको हास्यमूर्तिरिवास्ति। एष स्ववचोहास्यभङ्गीभिरस्माकं मनो विनोदयति श्रमखेदञ्चापनयति। अयं पठति। विद्यालयेऽपि सर्वेऽनेन प्रसन्ना भवन्ति।'' ''किं भोः! अपि त्वं पठसि?'' सहसैव साश्चर्यं मम मुखान्निर्गतम्। स तु, ''आम्, श्रीमन्! पठामि।'' इत्यपरं श्रमिकं दृष्ट्वा भूयोऽपि जहास। ''कस्यां कक्षायाम्?'' इति पृष्टे मयि, ''नवम्यामि''त्युदीर्य स गन्तुमियेष। ''व्यतीता खलु विश्रामवेला पुनः कार्यारम्भः स्यात्''- तेनैवमुक्ते सति सर्वे स्वं स्वं नियोगं प्रत्युन्मुखा अभवन्।

ग्रीष्मावकाशे नगरात् स्वग्राममागतोऽस्मि। तत्र विश्वविद्यालये शोधच्छात्रोऽस्मि। इहागत्य 'सूखाराहत' इति योजनायां ग्रामे मार्गनिर्माणं प्रचलतीति विज्ञाय प्रत्यक्षं द्रष्टुं तत्र गतेन मया मृत्तिकाखननकर्मणि व्यापृतोऽयं बालको दृष्टः। वार्तापत्रेषु बहुधा पठ्यते यदीदृशीषु योजनासु मार्गाः कूपाः सरांसि वा कर्गद एव निर्मीयन्ते। अत औत्सुक्यमासीद्यन्मम ग्रामे का दशा? किन्तु अत्रागत्य क्रियमाणं कार्यं दृष्ट्वा मनस्तोषो जातः।

अथ सायंकाले ग्रामाद्बहिः पूर्वदिश्यवस्थिते मन्दिरे प्रतिष्ठितं भगवन्तं भवानीपतिं प्रणम्य तत्रैवाजिरे कर्णिकारवृक्षस्याधस्तले प्रशस्तप्रस्तरपट्टि-कासने यावत्तिष्ठामि तावत्स एव बालकस्तत्रागत्य कूपादुदकमुद्धृत्य तेन मुखं हस्तौ पादौ च प्रक्षाल्य मन्दिरस्य गर्भगृहे गत्वा बद्धाञ्जलिः सन् विनतेन शिरसा महेश्वरं **भूतनाथं** प्रणम्य नेत्रे निमील्य भक्तिभावितेन स्वरेण, 'नमामीशमीशाननिर्वाणरूपमि'त्यारभ्य 'तेषां शम्भुः प्रसीदति' पर्यन्तं समग्रां स्तुतिमुच्चैरगायत्। ततश्च त्रिःप्रदक्षिणीकृत्य पुनर्मामभिवाद्य प्राचलत्। तदा तमाहूय निजे पार्श्वे समुपवेश्य तमपृच्छम्- ''त्वं बालकोऽसि, नवमकक्षायां पठसि, कथं कठिनं मृत्तिकाखननकर्म करोसि?'' स एव हासस्तन्मुखात्स्फुटितः।

मया तस्योत्फुल्लनयनयोरेकमपूर्वं ज्योतिरालक्षितम्। स प्रोवाच- "अधिकाधिकमध्ययनं समीहे। किन्तु मम पितरौ निर्धनौ। नान्यः कोऽपि सहायः। ये सन्ति सम्बन्धिनस्तेऽपि न समृद्धाः। मौर्यवंशीयोऽस्मि। पैतृकभूसम्पत्तिः नितान्तुन्दिला वर्तते। तदेव कृषिक्षेत्रं मम पितरौ भगिनी चाहर्निशं शाकादिकमुत्पादनाय स्वेदसलिलेन सिञ्चन्ति। अनुजस्तु शिशुरेव पांशुक्रीडापरः। पितरौ कथयतः- 'त्वं पठितुमिच्छसि, पठ। त्वामत्र गृहकर्मसु न नियोजयावः। यथेच्छं पठ। किन्तु विद्यालयीयव्ययभारं सोढुं नावां समर्थौ। भगिनी कालेन पतिगृहं यास्यति। तस्याः विवाहस्यापि चिन्ता वर्तत एव।' अतो मया विनिश्चितं यदवकाशदिवसेषु यत्र कुत्रचिच्छ्रमकार्यं लप्स्ये, तत्कृत्वा धनोपार्जनं सङ्ग्रहं च करिष्ये। एते कठिनश्रमकर्कशकायाः कोमलहृदयाः श्रमिकनिकायाः मह्यं स्निह्यन्ति। ते मामेतादृशमवसरं सूचयन्ति प्रोत्साहयन्ति च। इदानीं ग्रीष्मावकाशो वर्तते। अतस्तैस्सह मार्गनिर्माणे मृत्तिकाकर्मणि संलग्नः प्रतिदिनं पञ्चाशद्रूप्यकाण्युपार्जयामि। अपरेष्वप्यवकाशेष्वेवमेव करोमि। ममाध्यवसायेन पितरौ मे प्रसन्नौ। ममाध्ययनमपि निर्बाधं प्रचलति।" तस्यैतानि वचांसि निशम्य विद्यार्जने तन्निष्ठाञ्चानुभूय तं वर्धापयन्नहं तस्याऽऽलोकमयं भविष्यं प्रति महेश्वरं **भूतनाथं** प्रार्थितवान्।

एवं गच्छत्सु दिवसेषु कतिपयवर्षानन्तरमहं स्वीयशोधपरियोजनायाः कार्यवशाद् वाराणसीं गतवान्। तत्र रात्रौ रेलयानादवतीर्य यावद्रेलस्थानकाद् बहिरागच्छामि तावदेक आटोरिक्शाचालकः सहासं मामपृच्छत्- "महोदय, कुत्र गन्तव्यमस्ति?" "न क्वापि" रूक्षं मदीयमुत्तरं प्राप्य सोऽन्यं यात्रिणं प्रत्युन्मुखोऽभवत्। तस्य मुखाकृतिमालक्ष्य मयाऽनुमितं यदयम् आटोचालको दृष्टपूर्वोऽस्ति। पुनस्तस्य हासप्रकारमनुचिन्त्य विनिश्चितं सोऽयं बालकः कियद्वर्षपूर्वं ग्रामे दृष्टः परिचितश्च। हन्त! आटोरिक्शायानं चालयति!! अस्येयं परिणतिः! भवतु, तमाकारयामि। ततो ग्रीवावलनपूर्वकं तमाहूय, "किं भोः! त्वं स एव बालको यो नवम्यां कक्षायां पठनकाले ग्रामे 'सूखाराहत' इति योजनायां मार्गनिर्माणकर्मणि लग्नो मया दृष्टः? स तथैव जहास- "भवानपि मयाऽभिज्ञातोऽस्ति।" "किं भूतं तवाध्ययनस्य?" स तथैव जहास- "पठामीदानीमप्यत्रैव महात्मा गांधी काशीविद्यापीठमिति विश्वविद्यालये बी.ए. कक्षायास्तृतीये वर्षे। सर्वासु कक्षासु निरन्तरं परीक्षाः प्रथमश्रेण्यामुत्तीर्य छात्रवृत्तिं लभमानः प्रतिभाशालिच्छात्ररूपेण शुल्कमुक्तिमवाप्या-

ऽन्यतोऽपि पुस्तकीयं साहाय्यं समुपलभ्य छात्राणां गुरूणाञ्च प्रियतां परिगृह्य दिवसे कक्षाध्ययनं करोमि रात्रौ मितकालपर्यन्तम् आटोरिक्शायानं चालयामि। अनेन विधिना, 'अर्जनं पठनञ्च' (EARN AND LEARN) इति सिद्धान्तं स्वीकृत्य जीविकामुपार्जयामि। भगिन्याः पाणिपीडनं योग्यवरेण सह कृतमपि चानुजो ग्रामविद्यालये पठति। पितरावपि ससुखं कालं नयतः। अस्तु, सम्प्रत्याज्ञापयतु क्व नयामि?'' मयोक्तम्- ''प्रथमन्तु विचारितमासीत् समीपस्थ एव कस्मिंचिद् 'होटल' इति भाटकावासे रात्रिं व्यपनेतुं किन्त्विदानीं तवावासमेव जिगमिषामि। कुत्र निवससि?'' स सस्मितं ससङ्कोचमुवाच- ''कथं भवान् परिहसति? एकस्मिन् लघुभाटककक्षे वसामि। नास्ति तत्र सौविध्यम्। अस्ति नातिदूरे मम परिचितेन सञ्चालित एको यात्रिनिवासः। तत्रैव भवन्तं नयामी''त्युक्त्वा मम हस्ताल्लघुमञ्जूषामादाय कानिचित्पदानि गत्वा स्वीय-आटोरिक्शायाने निवेश्य तत्र प्रापयित्वा सर्वोचितं प्रबन्धं विधाय गतवान्।

अपरेद्युः प्रातरागत्य कुशलवार्तां विज्ञाय पुनरपि सायङ्काल आगतवान्। यावत्कालपर्यन्तमहं तत्र वाराणस्यामासम्, तेन सह प्रतिदिनं सम्मेलनं भवति स्म। ततः प्रस्थानकालेऽपि स सेवाभावेनोपस्थित आसीत्। पश्चादपि यदा कदा स स्मृतिपथमायाति स्म।

अथ वर्षत्रयानन्तरं वाराणस्यां तस्यैव महात्मा गांधी काशीविद्यापीठस्य संस्कृतविभागे प्राध्यापकपदे नियुक्तोऽहमध्यापयामि यत्र स कुमारोऽध्ययनम-करोत्। तत्र ज्ञातं यत्कियद्वर्षं प्राक् 'किसलय कुशवाहा' इति संज्ञश्छात्रोऽतीव प्रतिभाशाली बी०ए० परीक्षामुत्तीर्यैव प्रथमप्रयास एव भारतीयप्राशासनिकसेवायां चितः। इदानीमप्यत्रत्याश्छात्राः गुरुजनाश्च तमादर्शच्छात्रं महतादरेण स्मरन्ति। स एव मम परिचितो बालकः 'किसलय कुशवाहा' अस्तीति निश्चप्रचमनुमितम्।

दिवसाः व्यतीताः किन्तु तस्य स्मृतिर्नापगता। केनापि छात्रेण सह तस्य तुलना नासीत्। कदाचित्प्राच्यविद्यासम्मलनेऽहं केरलप्रान्ते त्रिवेन्द्रम-विश्वविद्यालये गत आसम्। तत्र तिरुवन्तपुरे पद्मनाभमन्दिरे भगवतो दर्शनार्थं गतेन मया दृष्टं यदेकः सद्वेशो महानुभावः कारयानादवतीर्य मन्दिरपरिसरे प्रविष्टः। दूरत एव तद् दृष्टिनिक्षेपमात्रेणानुमित्या स 'किसलय कुशवाहा' इति मया प्रतीतः। त्वरितपदेन तन्निकटमुपसृतस्य ममोपरि तस्याऽपि दृष्टिन्र्यपतत्।

सविस्मितं सस्मितं मम मुखान्निःसृतम्- "अरे त्वम्!" सोऽपि तेनैव भावेन- "कुथमत्र भवान्?" इत्यपृच्छत्। "केयमत्रभवती?" सङ्गतां तां सन्नारीमालक्ष्यासीन्मम प्रश्नः। तेन सङ्केतिता सा मम पादस्पर्शपूर्वकमभिवादनं कृतवती। सोऽपि सविनयं प्रणम्य तस्थौ। पश्चादावयोः संवादः प्रादुरासीत्। स भारतीयप्राशासनिकसेवायामत्रैव नगरायुक्तो नियुक्तोऽस्ति। पितरौ स्वर्गतौ। भगिनी श्वसुरालये ससुखं वसति। अनुजोऽपि बेंगलूरनगरेऽभियन्तृपाठ्यक्रमेऽध्ययनरतोऽस्ति। सहसा मिलितेन विनीतेन तेन सादरं साग्रहञ्चाहं तन्निवासं नीतः। विभवाधिकारसम्पन्नेन कृतज्ञेनानेन सुहृज्जनेन कृतां तां सपर्यामहमद्याप्यनुदिनं स्मरामि।।

**सर्वं ददाति सर्वेभ्यः सत्यनिष्ठापरः श्रमः।**
**श्रमो यः शिवसङ्कल्पः स सदा सर्वसिद्धिदः।।१।।**
**कथायां ग्रथितं वस्तु लभ्यते लोकसंश्रितम्।**
**लोके त एव मोदन्ते ये किसलयसन्निभाः।।२।।**
**कथातत्त्वं विजानीयात् सख्यसौख्यसमृद्धये।**
**यतो लोकोपकारायैतादृशी कथ्यते कथा।।३।।**

●

## राजहंसः

अस्त्येव मातृत्वं नाम नारीणां परमं श्रद्धास्पदं जीवनसाफल्यम्। जननी स्वर्गादपि गरीयसी महीयसी चेत्यवितथं तथ्यमस्वीकर्तुं कः समर्थः? **'सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे'** इत्युक्त्वा महाकविर्वस्तुतो जननीत्वमेव प्रणमति। अनपत्यानां पितरः भृशं शोचन्ति, पिबन्त्यश्रूणि न चाप्नुवन्ति सद्गतिमतो जना अभिलषन्ति गृहलक्ष्मीं सौभाग्यवतीं पुत्रवतीम्। सुदृढप्रजातन्तुततये प्रयतत एव सकलोऽपि विकलो जनः। अङ्कमारोप्य तनयं तन्मुखं चुम्बन्तौ पितरौ दर्शं दर्शं प्रसीदन्ति कुलवृद्धा नावसीदन्ति पितरः मोदन्ते च कुलदेवताः। येषां गृहाङ्गणे शिशूनां किलकितं न तिलकितं, रुदितं नोदितं, हसितं न लसितं, मुग्धकथितं न प्रथितं तत्तूषरभूरेव। धन्या साऽशून्या कुक्षिर्मातुर्या जनयति जगदुल्लासं निश्छलमुग्धहासं कृतवंश-प्रकाशं पूरितपरमाभिलाषं कलितकुलकीर्तिकमनीयाशं सकलस्वजनस्नेहपाशं शिशुम्।

अहो विडम्बना खलु विधातुर्यत्सर्वैश्वर्यसम्पन्नोऽपि भार्याभाग्यभूतिभोग-विपन्नोऽयं राजेश्वरः प्रायेण त्रिंशद्वर्षमितं दाम्पत्यजीवनं व्यतीत्यापि पुत्ररत्नस्य चन्दनादप्यतिरिच्य सुखदशीतलस्पर्शं नानुभूतवान्। दर्शनशास्त्रस्यानुभूतयोग-प्रयोगविशदया विद्यासम्पदा विराजित एष विश्वविद्यालयेऽस्मिन्नाचार्यपदप्रतिष्ठित आसीत्। न केवलं विद्यावैभवेनापितु सदाचारेण सद्व्यवहारेण चायं सुजनसमाजे बहुसम्मानभाजनमासीत्। भार्याऽस्य सुशीला नाम्नाऽपि सुशीला सर्वथा नामगुणानु-हारिणी, सद्वृत्तधारिणी, सकलशुभकर्मकारिणी व्रतधर्मचारिणी

आसीत्। किन्तु नियते: कोऽयं क्रूरप्रवृत्तिको विधि: यद्विधिरपि ताभ्यामपत्य-दानविषये मौनं भजते। गूढगणनागुणज्ञा: सफलफलादेशदक्षा ज्योतिर्विदोऽपि न किमपि स्पष्टं निर्दिशन्ति। अपत्यप्राप्तये येऽप्यलौकिका: लौकिका वोपाया: सिद्धा: प्रसिद्धा: श्रूयन्ते ते सर्वेऽनुष्ठिता:।

एकदा राजेश्वरो विश्वविद्यालयादागत्य स्वल्पाहारादिक्रमं परिसमाप्य विश्रमाय सुखासीन आसीत्। सुशीला तस्यार्धाङ्गिनी त्वनपत्यतयान्तर्दाहसन्तप्तापि स्मितानना सविनयं प्रोवाच- "स्वामिन्! भवत्प्रेम समवाप्य नितरामहं सुखमनुभवामि।। अकथितान्येव मदभीष्टानि सर्वाणि सुखोपभोगवस्तूनि भवान् स्वयमेव मह्यमुपहरति। कदापि न कश्चिदभावो मयाऽनुभूत:। भवत्कारणात् सर्वत्र सम्मानोऽपि लभ्यते। केवलमेकमेव दु:खं दारयति मे हृदयं यद्भवत: कुलप्ररोहोऽद्यापि तिष्ठत्यनभिव्यक्त एव। किं करोम्यहं मन्दभागिनी? दुर्दैवात्पराजितमत्र मे सामर्थ्यम्। अत: प्रार्थये वंशपरम्परानुच्छेदार्थं परत्रेह च शर्मणेऽपत्यरत्नलाभाय काञ्चित्कुलशीलयुतां कन्यकां परिणेतुमिति।"

राजेश्वर: सत्वरमेव, "शान्तं पापं, मैवं ब्रूही'त्युक्त्वा दक्षिणकरेण तस्या: मुखपिधानमकरोत्। ततश्चाब्रवीत्- "अस्मिन् परिणते वयसि कथं मां लोकोपहासपात्रत्वं नेतुमिच्छसि। कस्याश्चित्कन्यकाया जीवनेन सह विवाहकौतुकक्रीडने कोऽस्ति ममाधिकार:? अपि च, तस्या: गर्भान्मे वंशप्ररोह उत्पत्स्यत एवात्रेति किमैकान्तिकम्? अनपत्यावपि वाचस्पतिमिश्रनिभौ कीर्तिकायौ दम्पती सार्वकालिकौ जीवत:। अथवा, दशरथादयश्चरमेऽपि वयसि प्रजावन्तो जाता इति श्रूयन्ते। अतएव मा भव कातरे"ति पौन:पुन्येन तां समाश्वासयामास। साऽप्यश्रूणि प्रमृज्य तादृशमुदारं भर्तारं सभाजयन्ती स्वान्त:करणं तोषयामास।

एवं गच्छत्सु दिवसेषु कदाचिद्विश्वविद्यालयत: समागतो राजेश्वर: प्रसन्नवदनां भार्यां वीक्ष्य सहजतया पृष्टवान्- "सुभगे! अद्य त्वं कमप्यधिकतर-मेव मोदमावहसि। किमस्य कारणम्?" सा तु सविनयं मुकुलितकरा विकस्वरपिकस्वरा हर्षोल्लसितनयना सलज्जं सधीरमुवाच- "स्वामिन्! अद्य परमेश्वरदर्शनेच्छा जागर्ति। भवता सह शिवालयं जिगमिषामि।" तेन पृष्टम्- "अस्ति कश्चिद्विशेष:?" "तत्रैव ज्ञास्यति भवान्।"

ततस्तत्र गत्वा भगवतो महेश्वरस्य दर्शनं विधाय त्रि:प्रदक्षिणीकृत्य शिवायतनाजिरे पाषाणफलके समुपविश्य सुशीला लघुप्रसेवादेकं कर्गदखण्डं

नि:सार्य राजेश्वरस्य करेऽकरोत्। महदाश्चर्यकरं नितान्तमविश्वसनीयं किन्तु सत्यं वृत्तं तत्र आसील्लिखितम्. 'अल्ट्रासाउण्ड' विधिना सुशीलां सुपरीक्ष्य सिद्धान्तप्रयोगानुभवसमृद्धेन प्रसिद्धेन नारीचिकित्सकेन। राजेश्वरस्तु पत्नीमन्तर्वत्नीं विदित्वा महताऽऽह्लादेन तामभिनन्दितवान्। शुष्कप्राये व्रीहिक्षेत्रेऽनभ्रवृष्टिरिव, नीरसोद्याने चम्पककुड्मलमिव, घनान्धकारे दीपदर्शनमिव वृत्तमेतद् राजेश्वर:-याचिन्त्यमुपहारमादाय समागतम्। भाग्यस्य काचिदपूर्वा लीलाऽनुभूता। निरतिशयं सुखमनुभूयमानौ पुन: पुन: प्रणम्य सकलसृष्टिमङ्गलकरं प्राणिनामार्तिहरमाशुतोषं महेश्वरं राजेश्वरदम्पती गृहमागतवन्तौ।

तस्मादेव दिनाद्राजेश्वरस्य गृहे गृहिणीगर्भभारभरोल्लासोऽनिर्वचनीयान्त:करणप्रकाशो दिनानुदिनं संवर्धितोत्सवविलासो विराजते स्म। जीवनरसनिर्भरा काचिदमृतधारा सुशीलाया: क्रोडेऽमन्दान्दोलिता जाता। सम्प्रति 'जाये'ति शब्दस्यान्वर्थकतां चरितार्थीकुर्वाणा सुशीला नित्यं गर्भश्रियं पुपोष। राजेश्वरोऽपि नित्यं तस्या दोहदाभिलाषं प्रति सप्रेम सदयं साग्रहं गृहीतपूरणव्रतं सदोत्सुकं सावधानं कर्णं करोति। यदि सा कदाचिदौदासीन्यं भजते तदा राजेश्वर: स्वयमेव पृच्छापूर्वकं तां नोदयति, विनोदयति प्रमोदयते च। यथा यथा गर्भचलत्वं प्रवर्धमानमालक्ष्यते तथा तथा न केवलं राजेश्वरस्यापितु सुशीलाया: हृदि भाविपुत्रोत्सवोल्लास: पदं धत्ते। काले-काले प्रसूतिविशेषज्ञानां चिकित्सकानां परामर्शादिभिर्यथोचितं पथ्यौषधिसेवनं सविधि सुनियतं च क्रियते स्म।

अन्तत: समागतं तद्दिनं यस्य प्रतीक्षा चिरकालादासीत्। प्रदोषमुख एव पूर्णगर्भभारालसा पूर्णचन्द्रान्त:सत्त्वा प्राचीरिव लज्जारक्तमुखी मधुरमधुरां प्रसववेदनामनुभूयाऽपीयं सह्येति मनसि कृत्वा न कमपि कथितवती किन्तु प्रथमरविकिरणेन सह प्रात:काले सर्वानाशाप्रकाशेन पूरयन्ती राजेश्वरमाहूयैतां शुभां वार्तां श्रावितवती। राजेश्वर: पूर्वत: सन्नद्ध: तत्कालमेव तां प्रसूतिगृहं प्रापयामास। तत्र सर्वोपकरणसौविध्ययुते कक्षे रुचिरविन्यस्ते प्रशस्ते पर्यङ्के तां सन्निवेश्य सुखप्रसवाय स्वयं विगतचिन्तोऽपि भगवच्चिन्तनपरोऽभवत्।

अथ कृतेऽपि विविधोपाये व्यतीतेऽपि दिनत्रये यदा प्रसववेदना तथैवासीत्तदा शल्यकर्मैवैकमात्रं शरणमिति प्रसूतिगृहस्य प्रधानचिकित्सिका शल्यकर्मणेऽनुबन्धपत्रे राजेश्वरस्य हस्ताक्षरं कारयित्वा तद्विधिना गर्भाच्छि-शुमुद्धार्य दर्शयामास। नवजातस्य तनयस्य संज्ञाशून्यायाश्च भार्याया मुखं

दर्शं दर्शं पितृसंज्ञाभूषितस्य तस्य हृदयाब्धेरानन्दवीचयो वेलां समतिक्रान्तवत्यः। होरात्रयानन्तरं चेतनामुपागता सुशीला नेत्रे समुन्मील्य निजहृत्खण्डमौरसं पुत्ररत्नं स्वर्गादिवावतरितं समुद्वीक्ष्यानन्दस्य परां कोटिं जगाम। किन्तु हन्त रे भाग्यहतक! तस्याः हर्षोल्लासस्त्वया नानुमतः। अपरेद्युरेव सा तपस्विनी शल्यकर्मव्रणविकारतो दिवङ्गता। तद्रक्षणार्थं चिकित्सकानां सर्वे प्रयत्नाः विफलाः बभूवुः। राजेश्वरस्य जीवने नवागतं सुप्रभातमचिरमेव तमश्छन्नायां सन्ध्यायामवसितम्। तस्य हार्दोल्लासः क्षणादेव स्फुलिङ्गमिव प्रशमितः। कस्य भाग्यदोषादिदं दुर्घटितम्? जातस्य शिशोः? राजेश्वरस्य? उत सुशीलायाः? राजेश्वरं दृष्ट्वा कारुण्यमपि सकरुणं रोदिति। तेनेदानीं केवलं पुत्रार्थमेव जीवितव्यमस्ति।

अनया दुर्घटनया राजेश्वरस्य जीवनं परिवर्तितम्। विचित्रैवोदासीनता, अननुमेयो विरागोऽकथनीयैव विषयेष्वरतिस्तस्य मनसि परिव्याप्ता। विश्वविद्यालयादपि विरतः शिशुमधिकृत्यापूर्वप्रयोगेषु निरतो बभूव। शिशुं नगराद् दूरं नीत्वा कस्मिंश्चिदरण्यप्रांते तादृक्पालनं कर्तुमारब्धवान् यत्स कथमपि प्रत्यक्षमप्रत्यक्षं वा स्त्रीनाम जन्तुं न जानातु। सकौशलं तेन तादृशी सर्वा व्यवस्था कृता। प्रतिसप्ताहमेको वृद्धस्तत्र गृहोपकरणं प्रापयति। तस्मिन् निसर्गसुन्दरे वन्यपरिवेशे स बालकः पितुस्संरक्षणे क्रमशः परिवर्धमान आसीत्। राजेश्वरः तस्य संस्कारपूतं शिक्षणं स्वयमेव करोति स्म। वर्णज्ञानादारभ्य संख्याबोधनपूर्वकं कदाचित्प्रकृतेरुपादानं गृहीत्वा कदाचिदितिहासपुराणान्याश्रित्य ज्ञानविज्ञानकलासंस्कृतिशिक्षणं प्रचलति किन्तु तत्र प्रयत्नपूर्वकं स्त्रीणामुल्लेखो वारितः।

वस्तुतः स्त्रीणां विषये राजेश्वरस्य मनोभावोऽत्यन्तं विपरीतो जातः। स स्वीयं शिशुमादायैकं प्रयोगं कर्तुमियेष। यद्यबोधः शिशुः प्रारम्भादेव स्त्रीशब्दादप्यपरिचितः स्यात्तदा तां प्रति तस्याकर्षणं भवेन्न वेति परीक्षणधिया विजने वने एवं कुर्वता राजेश्वरेण सप्तवर्षाणि व्यतीतानि। सप्तादधिकतरं किमप्यायुरवाप्यापि बालकोऽयं वनपरिवेशतः पूर्णपरिचितोऽपि केवलं स्वपितरं तञ्च वृद्धमेव जानाति।

एकदा राजेश्वरः सस्नेहं पुत्रमवादीत्- "वत्स! अद्य त्वां नगरं नेष्यामि।" स मुग्धवचसोवाच- "तात! नगरं किं भवति?" "वत्स! तत्रैव

गत्वा ज्ञास्यसि।'' अथ विस्मितेन तेन बालकेन भौतिकसमृद्धं नगरमवलोकितम्। पिपासिते सति सुरसं जलपानं बुभुक्षिते सति सुस्वादु भोजनं कुर्वाणौ तौ त्रिपादीयानमारुह्य नगरभ्रमणं दर्शनीयदर्शनं चक्रतुः। क्वचिदेकत्र विद्यालयाद्ब-हिरागतानां श्वेतरक्तपरिधानभूषितानां बालिकानां समूहो दृष्टिपथे निपतितः। बालकः सकौतकं पप्रच्छ— ''तात! किमतेत्?'' ''वत्स! एते राजहंसाः।'' बालकः सोत्सुकनेत्राभ्यां निभालयन् तूष्णीं बभूव। दिवसावसाने पुनस्तौ वनकुटीरे समायातौ। सप्ताहमितं कालं व्यतीत्य राजेश्वरः स्वप्रयोगस्य परीक्षणार्थं पुत्रं सस्नेहं पृष्टवान्— ''वत्स! कार्यवशान्नगरं गच्छामि। यदि ततस्तुभ्यं किमपि रोचते, आनेष्यामि।'' पुत्र उवाच— ''तात! राजहंसो मह्यं रोचते। एकमानयतु। तेन सह क्रीडिष्यामि।''

**दैवं कोऽपि न जानाति सृष्टिस्तु नियमक्रमा।**<br>**भाग्यं फलति सर्वत्र नरः पश्यति केवलम्।।**<br>**मनोविज्ञानमाश्रित्य मानवस्य निसर्गतः।**<br>**लोकानुचरितं चैव कल्पितेयं कथा तथा।।**

●

## प्रधानार्चकः

अस्ति दक्षिणापथे विन्ध्यपर्वतश्रेण्यां श्रीशैवशैल इति रमणीयो गिरिशिखरः। तस्मिन् महति गिरिशिखरे विराजते त्रैलोक्यारम्भमूलस्तम्भः स्वयंभूर्भगवान् भक्तानां भवार्तिविनाशको भवेशो भवानीपतिः। स्वतेजसा विश्वमिदमालोकयतस्तस्य महिमा खल्वपारोऽनिर्वचनीयश्च। यस्य श्रवणमात्रेणाऽऽशुतोषार्चने मनोरतिं दधाना जनाः सर्वं कार्यजातं विहाय विधूय च लोभमोहजम्बालजालं परवशानीयमाना इवाऽऽस्थादृढरज्जुसमाकृष्टा अनुदिनं दर्शनपुण्यलाभाय कष्टमविगणय्य समागच्छन्ति। सत्यं हि तस्य देवाधिदेवस्याऽलौकिकः प्रभावो यद्दर्शनमात्रेण भक्तः सर्वं दुःखं विस्मृत्य परमानन्दमनुभवति। मनसः संसारो विलीयते, मनसि सद्विचारः प्रविशति भवति च दृढानुरागः सर्वसिद्धिदातारं भगवन्तमीशं प्रति।

प्रथमं तु शिखरमूले स्थित्वा तन्मन्दिरमेवावलोक्य महान् विस्मयो भवति। तुङ्गे गिरिशिखराग्रेऽवस्थितं मन्दिरं प्रतीयते स्वर्गादवतार्य तत्र स्थापितमिव देवैः प्रसादनार्थं महादेवम्। मन्दिरस्य शिखरशृङ्गे वेल्लद्वैजयन्ती नभोमण्डलं चुम्बितुमिवोत्पतन्ती यशःपताकेव भगवतो जगदीश्वरस्य चराचरलोक-कल्याणाभिनिवेशिनो विराजते। साऽऽलक्ष्यते कस्यचिन्मनःप्रसादमिवादाय गच्छन्ती द्युलोकं, कस्यचिन्मनोरथपूर्तिरिव समुत्सर्पन्ती नभसि विहर्तुं, कस्यचिन्मनोऽभिलाषेव पक्षमारोप्य विहरन्ती वियति, भूलोकस्य वार्तां निवेदयितुं त्र्यम्बकायोत्प्लवन्ती दूतीव कैलासधाम्नि, शिवायतनस्य तस्य वैभवमाख्यापयन्ती प्रसारितहस्ता सौभाग्यलक्ष्मीरिव विष्णुपदे। तादृशे दुर्गमे गिरिशिखरे केन

किमर्थं कथं वा निर्मितं प्रख्यापरं मन्दिरं प्रतिष्ठापितं च तच्छिवलिङ्गम्। यच्छ्रूयते तत्सर्वमैतिह्यम्। न कश्चिदस्य प्रामाणिक इतिहास उपलभ्यते। मन्दिरविषये नानाऽऽख्यानानि कथ्यन्ते ग्रामवृद्धैः। परम्परया सर्वे आजन्मन एव पश्यन्त्येतन्मन्दिरम्।

मन्दिरं प्रति गन्तुं नास्ति कश्चित्सुगमो मार्गः। न काचित्सोपानपरम्परा नैव काऽप्यक्लेशपदा वीथी। विशृङ्खलो विखण्डितः प्रस्तरचय एवोर्ध्वाधरं दृश्यते। जनानां गमनागमनवशात्केवलं पद्धतिरेव प्रजाता। कर्णपरम्परामधिरोहति वृत्तमिदं यत्कश्चित्सोपानपरम्परां निर्मातुमियेष, तत्कार्यमप्यारब्धं किन्तु दैवदुर्विपाकादचिरादेवाविज्ञातकारणात् स शिवसायुज्यं प्राप्तवान्। पितृसङ्कल्पितं पूरयितुं तथाकर्तुं प्रयतमानस्तस्य पुत्रोऽपि तत्रैव गिरिमूले सर्पदष्टो महाकालस्य प्रियतां लेभे। अवितर्कितमेतद्द्वयमपि दुर्घटितं विमृश्य ततो न कोऽपि तस्मिन् कर्मण्यग्रेसर्तुमुत्सहते। अतः सा मार्गपद्धतिस्तथैव तिष्ठति। किन्तु देवदेवं महादेवमर्चितुं धर्मप्राणा जनाः निरावरणपद्भ्यां प्रायेण सहस्राधिकाः स्थानीयाः दूरादागताश्च नित्यमेव गिरिशिखरारोहणमार्गकष्टानि सुदुःसहान्यपि विसह्य तन्मन्दिरं गच्छन्ति। वस्तुतो हृद्गताऽऽस्थैव सर्वं कारयति। साधूक्तम्- **"क्लेशः फलेन हि पुनर्नवतां विधत्ते।"** महान् खलु प्रभावो भगवतः शिवस्य महिम्नः। तत्र गत्वा भगवतो भवानीपतेर्दर्शनं लब्ध्वा जनाः पूर्वजन्मसुकृतं मन्यमानाः शङ्करस्य पुण्यप्रसादतः परां निर्वृतिं गच्छन्ति।

तस्य मन्दिरस्याऽलौकिकी शोभा भव्यता चाऽवर्णनीया विराजते। तामुपवर्णितुं शब्दानां सामर्थ्यमेव नास्ति। तस्य वास्तुविन्यासं प्रस्तरेषु च शिल्पकारैः कृतमपूर्वं रचनाकौशलं दर्शं दर्शं न केवलं सामान्या जना अपितु कलाविदो भवन्ति विस्मितमानसाः। यद्यपि मन्दिरं नास्ति सुविशालं किन्तु तस्य भव्यं चित्ताकर्षकं तोरणद्वारं, मरकतमयीमिवाऽनत्युच्चां वेदिकां, शालभञ्जिकाभिः समुत्कीर्णाभिश्च सपल्लवलताभिरलङ्कृतान् स्तम्भान्, नातिदीर्घमास्थानमण्डपं, श्वेतविशदैः पाषाणखण्डैर्निर्मितं गर्भगृहं, तन्मध्ये ज्योतिष्पुञ्जं विकिरन्तं कृतप्राणप्रतिष्ठं स्फटिकमणिमयं पारदर्शिमध्यमाकार-मप्युत्तमोत्तममप्रतिमं भास्वरं लसितबिल्वपत्रभालं चर्चितचन्दनं विहितदेवासुरमनुज-मुनिगन्धर्ववन्दनं सकलकामनानन्दनं गिरिजाहृदयस्पन्दनं लिङ्गवपुधारिणं महेश्वरं निर्निमेषनयनाभ्यां सादरमापिबन्तोऽपि जनास्तृप्तिं नानुभवन्ति। अस्त्येकमपरमपि चित्रमस्य विचित्रस्य संसारस्य वृत्तम्। तस्मिन्महत्युच्चशिखरे मन्दिरस्य द्वारप्रान्ते

सम्मुखमेवैकं, कपर्दे गङ्गेव कपर्दिनः, जलस्रोतो निसर्गतो निष्क्रम्य निरन्तरं प्रवहति समानधारया। तज्जलं सुस्वादु शीतलं हरति सर्वं तापं संहरति च सकलं पापमपनुदति च पर्वतारोहणस्याऽशेषं क्लमम्। जलं प्रणालिकया समीपस्थे ह्रस्वह्रदे निपतति। ततः कुत्र यातीति न कोऽपि जानाति। शिखरसम्भूतस्यास्य स्वर्गगङ्गानिभस्य स्रोतसो जलेऽवगाह्य (जलेन स्नात्वेत्यर्थः) विगतकल्मषो जनो यदा क्लिन्नगात्रेण सचैलं मन्दिरं प्रविश्य स्फटिकमणिमयं कर्पूरगौराभं शिवलिङ्गमर्चति तथा च तच्छबिं निपीय नेत्रनिर्वाणतां लभते तदा तन्मयीभूतो भक्तिभावपूतोऽलभ्यं पुण्यफलं समाप्नोति। तत्र शिखरस्थ एवानन्दोल्लसितमानसो दृष्टिं चतुर्षु दिक्षु प्रसारयति विस्तारयति चात्मभावं ततस्तस्मै सर्वं शिवमयमेव प्रतिभाति। एतावान् महिमा महतोमहत्तमस्येशानस्य नास्त्यविदितः केनापि। जटी मुण्डी शिखी वापि यः कश्चित्कुत्रचिदप्याश्रमे वसन्नवश्यमेवैकवारं तद्दर्शनं विधाय स्वजीवनं धन्यं सफलं च कर्तुं समीहते।

तस्य मन्दिरस्य प्रबन्धं कर्तुं घटिताऽस्त्येका न्यासपरिषद्। परिषदोऽध्यक्षो भवति जनपदाधिकारी, सदस्यास्तु समीपवर्तिनां ग्रामाणां प्रधानपुरुषाः सप्तसङ्ख्याकाः, तेष्वेको भवति प्रधानदेवलको मन्दिरस्य। एवमष्टसदस्यीया समितिर्मन्दिरस्य प्रबन्धनं निर्वहति। गिरिमूले न्यासकार्यालयो, यात्रिणां कृते सौविध्यसम्पन्ना धर्मशालाऽपि संस्थिताऽस्ति। प्रधानार्चकस्य साहाय्यार्थं द्वौ कनिष्ठावर्चकौ स्तः। रात्रौ गिरिशिखरे मन्दिरे वा न कोऽपि वसति। अस्तङ्गते सति भगवति सवितरि शयनार्तिक्यं विधाय मन्दिरकपाटञ्च पिधाय तदर्चकमण्डलं, तत्रावशिष्टाश्च भक्ता दर्शनार्थिनः सर्वे गिरिमूले समायान्ति। प्रातः पुनरेव गत्वा मन्दिरसम्मार्जनं प्रतिमालिङ्गार्चनादिकं कुर्वन्ति। केवलं वर्षे एकवारमेव शिवरात्रौ तत्राहोरात्रं यथाविधि कालानुसारं पूजनार्चनं विधीयते। नैके- भक्ता दर्शनार्थिनोऽर्चकसेवकमण्डलं च तत्र सोपवासं महेश्वरमुमापतिं सेवन्ते।

प्रधानार्चको महात्मा निर्लोभः प्रसन्नवदनः कर्मठः क्रतुक्रियाविधिज्ञः सेवाधर्मनिपुणः शैवागममर्मज्ञः सदाचारपरायणः संयतेन्द्रियः श्रद्धोपेतमानसः शिवार्चनैकनिष्ठो लोककल्याणोदारहृदय आसीत्। तस्य निर्देशने तत्र मन्दिरेऽप्रमादतो यथाविधि यथानियमञ्च शिवार्चनं भक्तजनसभाजनं भूदेवाराधनञ्च सुचारुतया प्रचलति स्म। धर्मवृद्धः स वयोवृद्धत्ववशात् शनैश्शनैर्जर्जरकायः

क्षीणतरशक्तिसमुदाय: शिथिलेन्द्रियनिचायो घटितजानुसन्धिवेदनाप्रदाय: सततशिखरारोहणेऽशक्तो जात:।

एकदा मन्दिरन्यासपरिषदोऽध्यक्षो जनपदाधिकारी भगवतो महादेवस्याशुतोषस्य दर्शनार्थं तद्व्याजेन मन्दिरस्य प्रबन्धव्यवस्थां प्रत्यक्षमेव विज्ञातुं सधर्मपत्नीक: समागत:। कर्णपरम्परया तस्यागमनमुपश्रुत्य समीपवर्तिनो मान्या: केचन न्यासपरिषत्सदस्या अपि त्वरितपदमागता:। तुङ्गशैलाधिवासिनो देवदेवस्य भवानीपतेर्महादेवस्य दर्शनेन पुण्यार्जनं कृत्वा तस्मिन् शिवार्चनसेवासंलग्नेऽर्चकवृन्दे गवेषमाणा दृष्टिरासीदध्यक्षमहोदयस्य, 'न दृश्यते प्रधानोऽर्चक' इति। 'अपि स्यात्स गृहीतावकाश: प्रयोजनवशादि'ति मनसि वितर्क्य पुन: 'अवकाशाभ्यर्थनां तु मह्यं निवेद्यैव सोऽवकाशं गृह्णाति। किं नाम कारणं तस्यानुपस्थिते:?' इति मनसा विमृष्टवान्। अध्यक्षस्य दृष्टिभङ्गिभिरेको वृद्धोऽनुभवसमृद्धो न्याससदस्यस्तस्य मनोभावमनुमीय सहजमेव प्रोवाच- ''मान्यवर, भवान् यं व्यक्तिविशेषं द्रष्टुमभिलषति सोऽतिवृद्ध: प्रधानोऽर्चक: सम्प्रति तुङ्शैलमारुह्य मन्दिरं यावदागन्तुं न प्रभवति। अन्यथा, भवत: सभाजनसूत्रधार: स एव स्यात्। अपि स्मरति भवान्? भवतोऽत्र प्रथमागमनपुण्यवेलायां स कीदृश उत्साहोल्लासमूर्तिरिव प्रतिभाति स्म? अहो दिव्यानुभावत्वं तस्य महात्मन:! रुद्रमन्त्रपाठे तस्य विलक्षणं तदुदात्तानुदात्तस्वरितं स्वरमाधुर्यं स्निग्धघनगम्भीरं विभाति। कियता मनोयोगेन सविधि रुद्रार्चनं तदानीं भवत: कारितं तेन!! सर्वेषां श्रद्धास्पद: स इदानीं निर्जरसदृशोऽपि देहधर्मस्यालङ्घ्यशासनप्रभावाज्जराजर्जरकाय: गिरिपादमूले न्यासनिकाय एव वसति। तत एव स निर्दिशति सर्वं करणीयम्। अतोऽवरुह्य तत्रभवन्तं तं भवान् द्रष्टुमर्हति।''

माननीयस्य न्याससदस्यस्यैभिर्वचोभि: जनपदाधिकारिण: स्मृतिपथे तस्य प्रधानार्चकस्य देवोपम: सर्वानुभाव: साक्षादिवोपस्थितो बभूव। स तु विनयावतार एव। पाण्डित्यस्य चरमोत्कर्षे स्थितोऽपि तस्य मनस्यवलेपलेशो नास्ति। तदानीं मया दीयमानां रुद्रार्चनस्य दक्षिणां वारं वारमनुरुद्धोऽपि स महता सङ्कोचेन कथं कथमपि स्वीचकार। एवमन्यान्यपि तस्य सुचरितानि मनसाऽनुस्मरन् न्यासपरिषदोऽध्यक्ष: न्यासकार्यालये समागत:। तत्रस्थ: स प्रधानार्चक: समुत्थाय सस्नेहं समानञ्च वैदिकेन पुरुषसूक्तेन शिवसङ्कल्पसूक्तेन च सस्वरपाठपुरस्सरं तं सभाजितवान्।

कुशलवार्तानन्तरं स प्रधानार्चकोऽध्यक्षं सम्बोध्य सविनयमब्रवीत्— "किञ्चिद् विज्ञाप्यमस्ति यदि स्यादनुमतिः।"

अध्यक्षः प्रोवाच- "कथं न! आज्ञापयतु भवान् यथा रोचते। भगवान् भवानीपतिः किं कारयितुमिच्छति जनेनानेन। सर्वथा प्रस्तुतोऽयं जनः सर्वमुचितं विधातुम्।"

प्रधानार्चकः सप्रश्रयं निजगाद- "सर्वमेव कर्तुमकर्तुञ्च समर्थ एव महेश्वरस्तुङ्गशैलाधिपतिः गिरिशः। अनिर्वचनीयः खलु महाकालस्य महिमा। दुरतिक्रम एव स कालः। स एव कालः भूतानि पचतीति संसारवार्ता। पश्यतु भवान्, अहमपि तेन कालेन पच्यमानोऽस्मि। योऽहं युवावस्थायां प्लवङ्गप्लुतगमनेन गिरिमूलात् शिखरमन्दिरं यावन्नेत्रमीलनकालमात्रं व्यतीत्य गन्तुं समर्थः सैवाहमिदानीं जराकवलितेन अस्थिपञ्जरमात्रावशिष्टेन कायेन यथाकथञ्चिद्दैनन्दिनकर्मनिर्वाहे प्रभवामि। शिखरमन्दिरं प्रति दृष्टिनिक्षेप-साहसोऽपि न भवति, तत्रारुह्य पदन्यासस्य तु कथैव का? अतो विचारयामि, मम जीवनकाल एव कश्चिदर्हः सुयोग्यो युवपण्डितस्तत्र प्रधानार्चकपदे नियुक्तः स्यात्। अतः परं भवानेव प्रमाणम्" इति।

प्रधानार्चकस्य निवेदनं निशम्य तं पुनरपि दर्शं दर्शं सोऽध्यक्षमहोदयो गभीरमननमुद्रामधिकृत्य तस्यानुमोदने ईषदिव शिरःकम्पं चकार। उवाच च— "युक्तमेतत्। नियमानुसारं, चयनविधिं परिपालयितुं सर्वप्रथमं विज्ञापनं करणीयम्। तत्त्वहं श्व एव प्रारूपं विनिर्माय सञ्चारमाध्यमेषु वार्तापत्रेषु च प्रेषयिष्ये। भगवान् महाकालः प्रयच्छतु भवते दीर्घायुष्यमारोग्यञ्चेति।"

सप्ताहमितं कालं व्यतीत्य तद्विज्ञापनं वार्तापत्रेषु प्रकाशितं जनैर्दृष्टम्। केचित्तर्कयन्ति— "जीविते सति प्रधानार्चके किमर्थमियं विज्ञापनम्?" केचन द्वेषिणो दूषयन्ति— "अयन्तु तस्यैव प्रधानार्चकस्य स्वार्थोपक्रमः। तस्य पुत्रः तत्रार्चकवृन्देऽस्ति। तमेव प्रधानार्चकं विधातुमयं प्रक्रमः। दिवङ्गते सति कः कस्य भवति? 'सर्वेषां श्रद्धभाजनमि'ति विचिन्त्य मम वचोऽपलापं कर्तुं कः क्षमः?' इत्येवमात्मजं स्वकं यथाभिलषिते प्रधानपदे स्थापयिष्ये इति योजना।" अपरे श्रद्धावन्तस्तु— "नैवम्, स निर्लोभो महात्मा पक्षपातमनर्गलं न करिष्यति। अपि च, यदि पदानुरूपयोग्यतां बिभर्ति तस्य पुत्रस्तदा तत्पदे पुत्रस्थापने को दोषः?" इत्येवमेव यस्य मनसि

यदायाति स तदेव प्रलपति। न भवन्ति सर्वे विवेकिनः संयमितवाचो वा। सुलभा निन्दकाः सर्वत्र चाकारणद्वेषिनः। परहितेषु कृतभियोगाः सज्जनास्तु दुर्लभाः। अस्तु तावत्पश्यामो विज्ञापनम्।

'आवश्यकताऽस्ति श्रीशैवशैलशिखरे स्थिते श्रीशिवमन्दिरे प्रधानार्चकस्य। रिक्तं पदमेकमेव। यथोचिता मासिकवृत्तिश्चतुरङ्केषु। अन्यच्चापि प्रवाससौविध्यम्। प्रधानार्चकपदमत्यन्तं श्रद्धास्पदम्। अतो निष्कलुषमुत्तमं चरित्रमनिवार्यमभ्यर्थिनः। न्यूनतमा योग्यता तु शैवार्चनपद्धतेः पूर्णमसंशयं ज्ञानं शास्त्रीयं व्यावहारिकञ्च। एतद्विषयकं प्रमाणपत्रमवश्यमेव योजनीयम्। मन्दिरं शैलशिखरे सुदूरमवस्थितम्। अतो नित्यमारोहणावतरणक्षमं सुपुष्टं शरीरम्। अधिकतममायुः त्रिंशद्वर्षमितम्। निःशुल्कमावेदनपत्रं मन्दिरस्य 'वेबसाइट' इत्यतोवतार्य सम्यक्प्रपूर्य विज्ञापनतिथेर्मासाभ्यन्तरकालेऽत्र दत्तसङ्केते मन्दिरकार्यालये प्रापणीयम्। अपूर्णान्यावेदनपत्राणि न विचारणीयानि। एतद्विषयकाः सर्वेऽधिकाराः न्यासपरिषदः सुरक्षिताः सन्ति।'

विज्ञापनानन्तरं मन्दिरे युवजनानां दर्शनार्थिनां संख्याऽनुदिनं वर्धत एव। मन्ये, तत्र केचन प्रधानार्चकपदाभ्यर्थिनोऽपि स्युः ते मन्दिरशैलारोहणाभ्यासं कर्तुं प्रयत्नपराः। मासाभ्यन्तरे मन्दिरकार्यालये प्राप्तानामावेदनपत्राणां संख्या प्रायशः पञ्चसहस्रमिता! आशातीता खल्वियं संख्या मन्दिरप्रबन्धनाय समस्यारूपेण प्रादुर्भूता। पदमेकं किन्त्वावेदकाः पञ्चसहस्रसंख्याकाः। सम्प्रति ये चत्वारो शिवार्चनसेवातत्परा अस्मिन् मन्दिरेऽर्चकास्तेऽपि सम्मिलिताः सन्ति आवेदकेषु। आनयपालदेशात् समस्तभारतपर्यन्तं तेषु तेषु नगरेषु ग्रामेषु च येऽपि युवानो देवलकाः कर्मकाण्डशौण्डा; शिवागमप्रचण्डाः यजनविधिपण्डाः दृष्टवन्तो विज्ञापनमिदं ते सर्वे भाग्यमुत्तोलनाय सस्पृहमावेदनं कृतवन्तः। यत्कर्म प्रेयसे श्रेयसे उभयथा कल्पते तत्कर्तुं को नेहते? **'यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः'** इति न्यायेन प्रयत्नस्तु करणीय एव। यतो हि **'न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः'** इति। यदि कश्चिदर्होऽपि योग्योपि न समीहते किञ्चित्कर्तुं, कथं तमुपयास्यति सिद्धिः? प्रयत्नरूपे कर्मण्येवाधिकारः फलं तु दैवायत्तम्। अत एव प्रधानार्चकपदं लब्धुमियं प्रतिस्पर्धा।

अवसिते सत्यावेदनावधिकाले, प्राप्तानामावेदनपत्राणामवेक्षणं विवेचनञ्च

प्रारभत। प्रायेण सहस्रमितानि आवेदनपत्राणि समुचितार्हताऽभावे निरस्तानि।

अथ न्यासपरिषद उपवेशने साक्षात्कारविधिमधिकृत्य विमर्शः सञ्जातः। त्रिस्तरीयं परीक्षणं स्यादिति सर्वेषां विचाराः प्रादुरासन्। प्रथमस्तरे स्वास्थ्यपरीक्षणं शैलाधिरोहणम्। द्वितीयस्तरे स्वरपरीक्षणम्। अन्तिमे च तृतीयस्तरे शास्त्रज्ञान-परीक्षणम्। एवं साक्षात्कारस्य सप्ताहव्यापिकार्यक्रमः निर्धारितः। साक्षात्कारतिथीनां विनिश्चयोऽपि कृतः। साक्षात्कारसमितेराध्यक्षं निर्वोढुं प्रधानार्चकः प्रस्तावितः किन्तु पुत्रस्याऽभ्यर्थित्वा''न्नोचितमि''त्युक्त्वा स निषिद्धवान्। अतः परिषदोऽध्यक्ष एव तत्पदमपि भूषयत्विति निर्णीतः सदस्यैः।

पत्रादिमाध्यमैः न्यासकार्यालयेन सूचिताः प्रायः सर्वेऽपि सूचीबद्धा अभ्यर्थिनः यथाकालं निर्धारिततिथौ समुपस्थिताः। स्वास्थ्यपरीक्षणाय जनपदाधिकारिणा चिकित्सकानां दशदलानि घटितानि। मुख्यचिकित्साधिकारिणो निर्देशने स्वास्थ्यपरीक्षणमारभत। अस्मिन्नुपक्रमे दिनद्वयं व्यतीतम्। अनेन प्रायेण पञ्चशतमिता अभ्यर्थिनः स्वास्थ्यपरीक्षणे अयोग्या इति नाङ्गीकृताः। ततो नियतसमयावधौ पर्वतारोहणस्पर्धा समारब्धा। तस्मिन् दिने सामान्या दर्शनार्थिनो निषिद्धाः पर्वतमूल एव निवारिताः। अस्यां स्पर्धायामवशिष्टानाम-भ्यर्थिनां संख्याऽल्पीयसी सीमिता। केचनानभ्यासवशात् निर्धारितसमये आरोहणे नासन् समर्थाः। केचन तं क्लिष्टमार्गं त्वरया लङ्घनप्रयत्नेऽसंतुलिता भूलुण्ठिता आहता अपि अभवन्। मन्ये, तत्रावशिष्टानां सफलप्रतिभागिनां संख्या सीमिततरा भूत्वा शतं स्पृशन्ती बभौ। एवं दिनचतुष्टयं व्यतीत्य स्वरपरीक्षणं समारब्धम्। एतत्कृते जनपदाधिकारिणा 'प्रसारभारती'ति शासकीयसंस्थायाः सेवा गृहीता। ते प्रसारभारतीविशेषज्ञाः यथोचितानामुपकरणानां साहाय्येन स्वपरीक्षणमारब्धवन्तः! दिनद्वये एतदपि सम्पन्नम्। अत्रापि बहवो नैराश्याम्भोधौ निमग्नाः। एवमन्ततः केवलं सप्तसंख्याका एवाभ्यर्थिनः शास्त्रीयज्ञानपरीक्षणायाऽवशिष्टाः। तेष्वेकः प्रधानार्चकस्य पुत्रोऽप्याशापाशैर्गृहीतः।

एतेषु सप्तसु कश्चिदेक एव तत्पदमलङ्करिष्यतीति सर्वेषामभ्यर्थिनां मनसि 'सः को भविता?' इति कुतूहलमनुक्षणं समुदेति विलीयते च। आशुतोषो भगवान् शैवशैलाधिपतिर्महादेवः कस्य सेवां स्वीकरिष्यतीति जिज्ञासा तत्रस्थानां समेषां भक्तजनानामास्थाननिवासिनाञ्च हृदये जागर्ति। श्वो भविष्यति परीक्षणमित्यौत्सुक्यं सर्वत्र प्रसरति। के विशेषज्ञाः कुत्र

आयाता इत्यपि समुत्कण्ठा चेतांसि समाकुलानि विदधाति। एकमेकं क्षणं सुदीर्घतरं प्रतिभाति। कदा भविष्यति रजनी विभाता? कदा प्रदास्यति भाग्यफलं विधाता?? इयं प्रतीक्षाऽपि तेषामभ्यर्थिनां परीक्षणं करोति।

केवलं तत्र सप्तसु एक एवाभ्यर्थी निराकुलस्तिष्ठति। स तु देवदेवं महादेवं शरणं गतस्तस्यैवेच्छाविलासे मनोमग्नः सर्वकर्मप्रयत्नेषु तस्येश्वरस्य सपर्यामनुभवति। तस्य प्रसादेनैव सर्वं साध्यं, सर्वसिद्धयस्तस्य सङ्केतमनुसरन्ति, स एव सर्वं कर्तुमकर्तुमन्यथाकर्तुं समर्थः, स सर्वज्ञः सर्वं विजानाति, अयं संसारस्तस्यैव भ्रूविलासस्तस्मै यथा रोचते सकरणं जगत्तथैव परिवर्तते इति सुस्थिरमतिः स मतिमान् तमेवैकं समाराध्यं सर्वैस्साध्यं ध्यायं ध्यायं मनःशान्तिं लभते स्म। स यावदिहागतस्तस्य मनसि सुचिन्त्य एक एव भावो वारं वारं समुदेति- 'अयं शैवशैलः श्रीशैल इव चिन्तामणिनिचयो भगवता भवानीपतिना भवहरेण भवेन स्वसम्भवेन कृपयाऽधिवासेन कैलास इव प्रसादीकृतः। सोऽचिन्त्यप्रभाव आशुतोषस्वभावो नित्यमेवाविमुक्तोऽत्र रमते। दर्शनार्थिनः श्रद्धालवो दूरदूरात् सततं पुण्यार्जनाय भवाब्धितरणाय तमुपयान्ति। पिपीलिकापङ्क्तिरिव भक्तानां सरणिरादिवसमुर्ध्वं सरति गिरिपादमूलात्तुङ्गं शिखरम्। दर्शनार्चनैः धन्यतां ब्रजन्ति पाशमुक्तिमभि-याचमानास्तेऽपशवोऽपि पशवः पशुपतेः। अनुपमेयोऽयं शिवालयो वैभवे। यथा श्रूयते स्वर्णं रजतं हीरकादीनि रत्नानि लक्षलक्षं च द्रव्यमुद्राः समर्प्यन्ते मन्दिरकोषाय धनेशसखचरणेषु। वैभवाढ्यस्य तस्य मन्दिरास्थानस्य शोभा काचिदपूर्वैव। शिखराग्रे स्वर्णपत्रमण्डनं, भित्तिषु मरकतमणिखचनं, चन्दनद्वारकपाटेषु रजतावरणं, गोपुरे तोरणेषु च विचित्रालङ्करणमतीव मनोहरं नयनानन्दकरम्। गर्भगृहस्य काप्यनिर्वचनीयाऽलौकिकी विच्छित्तिः। मणिमयस्वर्णाधारवेदिकायां विराजमानं शिवलिङ्गं तु सकलब्रह्माण्डराजराजेश्वर इव सिंहासनाधिरूढो विभाति। मन्दिरमुभयत उद्यानं नन्दनकाननमिव, शीतलसुस्वादुजलस्रोत आकाशगङ्गेव श्रद्धालुजनेभ्यः सुखं वितरति हरति श्रान्तिं क्लान्तिञ्च। स्निग्धगम्भीरघोषो घण्टानादो मधुरः श्रोत्रपेयश्च शङ्खध्वनिः अपूर्वं भक्तिभावं जनयति। भगवतः शैवशैलेश्वरस्य दिव्यं दर्शनमचिन्त्यां मनःशान्तिं वितनोति। दिने तु सूर्यरश्मिभिः मन्दिरमिदं चित्रविचित्रं चकास्ति। चन्द्रिकासु, क्षपासु गिरेरधस्तादस्य मनोऽभिरामां शोभां विलोक्य प्रतीयते

यत् तत्र महेश्वरेण स्वर्गखण्डमेकमाहृत्य स्थापितं भक्तेभ्यः नाकलोकसुखं प्रदातुम्। अकल्पनीयं खलु नयनाभिरामं दृश्यं तस्येशानमन्दिरस्य। किन्तु सर्वसौविध्यमयमिदं मन्दिरं कथं सुगममार्गविहीनम्? प्रस्तरखण्डमयी कण्टकाकीर्णगुल्माच्छादिता पद्धतिरद्यापि तथैव यथा कदाचिन्मन्दिरनिर्माणकाले आसीत्। गिरिमेखलाघटितं वलयाकारं मार्गमथवा सोपानवीथिकां निर्मातुं न केनापि प्रयत्नः कृतः? अविश्वसनीयमिदम्। सर्वविधसामर्थ्योपेतं प्रतिभाति मन्दिरप्रबन्धनम्। किन्तु कश्चिन्मनागपि चर्चां न करोति। येऽप्यायान्ति यथाकथञ्चित् कष्टं विसह्य शनैश्शनैः यष्टिकाऽऽलम्बिताः निरन्तरमुच्चतरं मार्गमतिक्रम्य भगवतो दर्शनं प्राप्य प्रसन्नमनसा प्रयान्ति। दुःखान्यनुभूयैव सुखानि शोभन्ते। तीर्थाटने देवदर्शनयात्रासु वा प्राप्तेन कष्टेन पापं विनश्यति पुण्योदयश्च भवतीति भारतीयानां धर्मप्राणानां जनानां दृढो विश्वासो महती चास्था। सुखं दर्शनं तीर्थाटनं वाऽचिरमेव विस्मृतिगर्ते याति किन्तु दुःखं दर्शनं तीर्थाटनं वाऽऽजीवनं पौनःपुन्येन स्मृतिपथमायाति। अनेन श्रद्धातिशयः फलति।'' इत्येवं बहुधा विमृश्य तस्य मनसि प्रतीतिरभवद् यदत्र भवेन्नाम किमपि रहस्यम्। यदि देवाधिदेवो मामनुगृह्णाति प्रसीदति च मह्यं सपर्यावसरं प्रदातुं तदाऽवश्यमेवाहं गिरिमार्गलङ्घनाय सुगमं मार्गं निर्मातुं प्रयतिष्ये इति तस्य मनःसङ्कल्प आसीत्।

आगामि दिवसे शास्त्रपरीक्षणमायोजितम्। स्थानमासीत् मन्दिरपरिसरे विनिर्मितं सभाऽऽस्थानमण्डपम्। निर्धारितसमये चयनमण्डलस्योपवेशनं प्रारब्धम्। त्रयो बाह्यविशेषज्ञाः ह्य एवात्र प्राप्ताः सुगोप्यविधिनाऽऽवासिता च। तेषां परस्परमालोकनमप्यत्रैवाऽभवत्। प्रधानार्चकमतिरिच्य न्यासपरिषदोऽध्यक्षसहिताः सर्वे सदस्याः समुपस्थिता आसन्। अर्धवृत्ताकारपंक्तौ मध्येऽध्यक्षः, तमुभयतो वामपार्श्वे विशेषज्ञयुताश्चत्वारो दक्षिणपार्श्वेऽपि विशेषज्ञयुताश्चत्वारः सदस्या कृतावस्थाना आसन्। सम्मुखमासन् सप्तसंख्याका अभ्यर्थिनः। एवं नवग्रहोपेतं सप्तर्षिमण्डलं विराजते स्म। विशुद्धवेषाणां पूतमनसाञ्च तेषां काऽप्यभिख्या आसीत्। पुराणेषु वर्णिता सुधर्मा सुपर्वा वेति देवसभाऽत्र प्रत्यक्षमिवाभाति। स्मरणीयोऽयं दिवसो मन्दिरस्येतिहासे यतो हीदृशः साक्षात्कारोऽतः पूर्वमभवदिति न केनचित् स्मर्यते।

अभ्यर्थिनामकारादिरीत्या नामक्रमेणोपवेशनार्थं स्थानमासीन्निर्धारितम्। योऽयमभ्यर्थी विगतदिवसे मन्दिरमार्गविषये चिन्तनपर आसीत्, अकारादिरीत्या

तस्य नामासीदन्तिमे सप्तमे स्थाने। अतः स निश्चिन्तमुद्रया विशेषज्ञानामन्येषां च सदस्यानां प्रश्नान् क्रमप्राप्तश्चाभ्यर्थिन उत्तराणि सावधानं शृणोति स्म। कठिनः खलु परीक्षाकालो दुर्भरः। महतामपि धैर्यधनानां हृदयं वेपते धैर्यञ्चापयाति। प्रश्नोत्तरे केषाञ्चिदभ्यर्थिनां दशाऽपि एतादृशी जाता। मन्ये, उपस्थितोऽपि विषयो विस्मृतः स्खलितो वा। विशेषज्ञा आचार्यास्तत्त्वावगाहि-प्रश्नान् पृच्छन्ति स्म। ते यदर्थमत्राहूतास्तद्दायित्वं सर्वात्मना शुचितया च निरपेक्षा अनासक्ताः निर्वोढुं प्रयतमाना प्रतीयन्ते। नानाविधैः प्रश्नैरभ्यर्थिनां ज्ञानगाम्भीर्यं, प्रयोगविधिनैपुण्यं शिवसपर्यानिष्ठत्वं, मनोभावं हृदयस्यौदार्यञ्चैतानि सुनिपुणं परीक्षितुं तेषां प्रयासः। अतस्ते क्वचिदपि कोणात् स्वपक्षतः किञ्चिन्न्यूनत्वं नानुमन्यमानाः प्रतीयन्ते।

एवं क्रमशः साक्षात्कारविधौ सम्प्राप्तः सप्तमक्रमाङ्कोऽभ्यर्थी। आसन्न एव मदीयः क्रम इति पूर्वतः स सन्नद्ध आसीत्। आकारिते सति स्वीये नाम्नि स सविनयं सर्वानभिवाद्य विद्यागुरुं महेश्वरं च मनसा स्मारं स्मारं सुस्थिरं तस्थौ। तमभिलक्ष्यैको विशेषज्ञ आदिदेश- "किमपि मङ्गलपद्यं श्रावय" इति।

सोऽपि मधुरेण स्वरेण-

**'रजोजुषे जन्मनि सत्त्ववृत्तये**
**स्थितौ प्रजानां प्रलये तमःस्पृशे।**
**अजाय सर्गस्थितिनाशहेतवे**
**त्रयीमयाय त्रिगुणात्मने नमः।।'**

इति पद्यं भक्तिभावितान्तःकरणोत्थितं श्रावयामास। तस्येमामवसरानुरूपां प्रस्तुतिं स्तुतिं निशम्य, तत्सन्निविष्टं वस्तु विविच्य, स्वरमाधुरीं च निपीय सदसि सर्वे चमत्कृता जाताः। अहो, प्रकटितमनेन स्वकीयं वैलक्षण्यम्। पश्यामस्तावदित्यपरो विशेषज्ञः- "अपि स्मरसि कमपि श्लोकं कस्यचिन्महा-काव्यस्यास्ये यज्ञस्याऽक्षुण्णं हविरिव निधत्तं शिवशक्त्योरभिन्नं स्वरूपमेकत्र स्तोतुमि"ति? "ओम्। श्रोतुं प्रसीदन्तु अत्रभवन्तो भवन्तः-

**वागर्थाविव सम्पृक्तौ वागर्थपतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।**

इति मङ्गलश्लोकः कविकुलगुरुणा कालिदासेन रघुवंशमहाकाव्यस्यादौ

निबद्ध एव। मन्ये, भवतामभिप्रायोऽयमेव विलसति।"

"साधु-साधु।"

"का अष्टौ मूर्त्तयः शङ्करस्य?"

"**भूतार्कचन्द्रयज्वानो मूर्त्तयोऽष्टौ प्रकीर्तिताः**" इति संक्षेपतोऽष्टौ मूर्त्तयः परिगणिताः। विस्तरेण तु महात्मनः कालिदासस्याभिज्ञानशाकुन्तलस्य नान्दीपद्ये-

**'या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री**
**ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।**
**यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः**
**प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः।।'**

इत्थं, अवनि-पवन-गगन-दहन-तपन-भुवन-तुहिनकिरण-यजमानमयी-मूर्त्तयोऽष्टौ शिवस्य प्रत्यक्षमेव शिवकारिण्यो लोकस्य।"

"शिवस्य पञ्चमुखत्वं कथमुपपद्यते?"

"पञ्चस्वरूपात्मकः शिवः। तानि पञ्चस्वरूपाणि सन्ति- सद्योजातो, वामदेवोऽघोरः तत्पुरुष ईशान इति। एतत् मुख्यं स्वरूपम्। मुखमिव मुख्यम्। अतः शिवस्य पञ्चमुखत्वमुपपद्यते प्रत्येकस्यैकैकं मुखमिति।

"किं नाम पुष्पं प्रियं शिवाय किञ्चाप्रियम्?"

"यथा जानात्येष जनः, मन्दारपुष्पं प्रियं रोचते शिवाय, केतकी-पुष्पञ्चाप्रियमतो निषिद्धम्।"

"का भवति अष्टपुष्पिका? अनया शिवार्चनस्य को विधिः?"

"यथाज्ञातं प्रतिपाद्यते-

**'बुकः पेणः सधुर्धूरः सुमनाः पाटला तथा।**
**पद्ममुत्पलगोसूर्यमष्टौ पुष्पाणि शङ्करे।।'**

इत्यष्टप्रकाराणि पुष्पाणि प्रयुज्यन्तेऽष्टपुष्पिकायाम्। एतेषामष्टपुष्पाणामेकत्रनिचय एवाष्टपुष्पिका। अनया शिवार्चनविधिस्तु अग्निपुराणे-

**'यजेत् स्नात्वा तु मध्याह्ने अष्टपुष्पिकया शिवम्।**
**पीठमूर्तीः शिवाङ्गानां पूजा स्यादष्टपुष्पिका।।'**

अत्रैकैकस्य पुष्पस्य चतुषष्टि: संख्या प्रयुज्यते। एवमष्ट-प्रकारक-पुष्पनिचय: चतु:षष्टिमित: सज्जीक्रियते। पुन: भगवत: शिवस्य अष्टमूर्ती: परिकल्प्य ताभ्य: क्रमेण पृथक् पृथगष्टपुष्पिका समर्प्यतेऽष्टवारम्। इत्थमेकैकस्य मूर्ते: कृतेऽष्टवारमष्टपुष्पिका इति। यदि मान्या आदिशन्तु, प्रयोगपूर्वकं प्रदर्शयितुं सज्जोऽयं जन:।"

"नहि, नहि भवता सुस्पष्टमाख्यातं व्याख्यातञ्च। सुकरमिदम्।"

"गोत्रेण को भवान्? को वेद: का च शाखा?"

"गोत्रेण भारद्वाजोऽयं जन:। तत्र संहिता शुक्लयजुर्वेदो वाजसनेयिमाध्यन्दिनी च शाखा।"

"अस्मिन् वेदे शुक्लकृष्णयो: को भेद:?"

"मन्त्रभागे गद्यस्य मिश्रत्वात् कृष्णत्वममिश्रत्वाच्च शुक्लत्वम्।"

"रुद्रशिवयो: को भेद:?"

"तत्त्वत एक एव स्वरूपतो भेद:। वस्तुतो वेदेषु यो रुद्र: स एव पुराणेषु शिव:। उग्रो रुद्र: शान्त: शिव:।"

"अपि कण्ठस्थोऽयं शुक्लयजुर्वेद:?"

"ओम्, पूर्णत: कण्ठस्थ:। प्रतिदिनमेव स्वाध्यायावृत्तिर्विधीयते।"

"शिवसङ्कल्पसूक्तं सस्वरं श्रावयतु।"

"यथा भगवते रोचते। श्रूयन्तामत्रभवन्तो भवन्त:—

**ॐ यज्जाग्रतो दूरमुदैति दैवं**
**तदु सुप्तस्य तथैवैति।**
**दूरंगमं ज्योतिषां ज्योतिरेकं**
**तन्मे मनः शिवसंकल्पमस्तु।।**

इत्येवमुदात्तानुदात्तस्वरितस्वरप्रतीत्यर्थं हस्तसञ्चालनपूर्वकं यावदग्रे पाठं कर्तुमुद्यतस्तावन्निवारितस्तत्रैकेन विशेषज्ञेन- "साधु साध्विति।"

"रुद्राभिषेक: कतिधा कारित: सम्पादितो वा?"

स: सविनयं प्रोवाच- "पूर्णतया नात्र स्मृतिपथमायाति, प्रायेण शतवारम्।"

"वेदपाठे का विकृतयो मता:?"

**"जटा माला शिखा रेखा ध्वजो दण्डो रथो घन:।**
**अष्टौ विकृतय: प्रोक्ता: क्रमपूर्वा महर्षिभि:।।"**

वेदमन्त्राणां स्वरूपसंरक्षणाय ये पाठविधय: परिकल्पितास्त एव विकृतय इति प्रोक्ता वेदज्ञै:। अत्र विकृतिषु संहिता-पद-क्रम पाठानां नोल्लेख:। अत्र 'घनपाठ'स्तु जटिलतम:।

"अलमतिशयेन। कश्चित् शान्तिपाठ: करणीय:।"

**"ॐ पूर्णमद: पूर्णमिदं पूर्णात्पूर्णमुदच्यते।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।।**
**ॐ शान्ति: शान्ति: शान्ति:।।इति।।"**

इत्थं साक्षात्कारप्रक्रियायां शास्त्रपरीक्षणमपि सम्पन्नम्। ततो न्यासपरिषदोऽध्यक्षो जनपदाधिकारी, य: साक्षात्कारमण्डलस्यापि अध्यक्ष:, सर्वानभिवाद्य कार्तज्ञं विज्ञप्तवान्। सूचितवाँश्च- "सर्वे न्यासपरिषत्सदस्या विशेषज्ञाश्चात्रैव विराजमाना: स्यु:। मान्या अभ्यर्थिनोऽपरपार्श्वस्थिते कक्षे आतिथ्यं गृह्णन्तु। अन्तिम: परिणामस्तु अचिरमेव कर्णगोचरीभविष्यति। अद्यैव प्रदोषकाले भगवत: शिवस्य सन्ध्यानीराजनसमकालमेव प्रधानार्चकस्य पट्टाभिषेको भविष्यति। तदर्थं वर्तमानप्रधानार्चकोऽत्रागन्तुं मया निवेदितोऽस्ति। धन्यवादा:।।"

सर्वेऽपि सप्ताभ्यर्थिनस्तत्र पार्श्वकक्षे गता: सुखोपविष्टा: परस्परं चयनचर्चानिरता अभवन्। सप्तमो य: शिवेन्द्रशर्मा, तस्मै तेऽन्यो वर्धापनानि दत्त्वा महतादरेण सभाजयामासु:। यतोहि सर्वेषां प्रश्नोत्तरकाले ते सर्व एवोपस्थिता आसन्। शिवेन्द्रशर्मा तु बद्धाञ्जलि: सन् सविनयं सर्वान् स्निग्धवचोभि: सुधावर्षै: स्नपयन्निव ब्रवीति स्म- "बन्धव:! फलं तु भाग्यायत्तं, स्वाधीनं खलु कर्म। अतोऽत्र विषये कश्चिद् दैवज्ञवर्योऽपि फलादेशं कर्तुं न समर्थ:। यद् भविता तत्तु भगवत: प्रसाद एव। भवन्त: सर्व एव पण्डितप्रवरा: वरेण्या: सन्ति। अत: क्लिष्टकल्पनया तर्केण वाऽलम्। यथा परीक्षाकालस्तथैव प्रतीक्षाकालोऽपि। स्मर्यतां भगवन्नाम।" इति।

प्रायेण होराद्वयमितं कालं व्यतीत्य न्यासपरिषत्सदस्य: कश्चिदागत्य

तान् सर्वानभ्यर्थिनो निवेदयामास पुनरागन्तुं तस्मिन्नेव समितिकक्षे। प्रावृट्काले मेघध्वनिं श्रुत्वा यथा कश्चिच्चातकः, कश्चिद्भेकः, कश्चिन्मयूरः, कश्चिदिन्द्रगोपः, कश्चिद्बकः, कश्चित्प्रवासकः कश्चिच्च कृषकस्तथैव ते सोत्कमनास्तत्र गत्वा यथास्थानमुपविष्टाः। वर्तमान-प्रधानार्चकपुत्रोऽभ्यर्थी आसीन्मनागाश्वस्तः। शिवेन्द्रशर्मणो मनो निर्विकारमासीत्। भवितव्यतां न कोऽपि प्रमार्ष्टुं शक्तः। यदस्मदीयं प्राप्तव्यं तत्तु अवश्यमेव प्राप्स्यते इति स पौरुषभाग्ययोर्भाग्यमेव प्रबलमङ्गीकरोति। सर्वेषामेव दृष्टिरध्यक्षमुखासक्ता तिष्ठति। एतन्मध्य एव जराजर्जरकायः किन्तु तेजोनिकाय इव प्रधानार्चकस्तत्र पदमकरोत्। सर्वे सदस्याः समुत्थाय स्वागतवचोभिस्तमभिवाद्यैकस्यां प्रशस्तायामासन्दिकायामुपावेशयन्। सोऽपि प्रहृष्टमनसा सर्वान् प्रत्यभिवाद्य तस्थौ। ततोऽध्यक्षस्तमब्रवीत्- "दिष्ट्या वर्धते भवान्"- इत्यर्धोक्त एव तस्य पुत्रस्य हृदयकमलं प्रफुल्लम्। "भगवतो देवाधिदेवस्य कृपया भवतः पदमलङ्कर्तुमस्माभिः एकं सुयोग्यं देवलकरत्नमवाप्तम्। साक्षात्कारमण्डलस्य निर्णयोऽङ्कित एवास्मिन् पत्रे। अस्माकं सौभाग्यादस्यां शुभवेलायां भवानत्र... "नोचितं नोचितमि"त्युक्त्वा स वृद्धस्तमेवाधिकारिणं प्रार्थयामास तथाकर्तुम्।

अथ सोऽध्यक्षस्तं पत्रं सुनिपुणं निभाल्य समेषां मनांसि कुतूहलाकुलानि कुर्वाणः सप्रश्रयमुवाच- "मम करे करम्बिते पत्रे यद्विलसति तत्तु केवलं परमेश्वरस्येच्छेति मन्ये। प्रायेण पञ्चसहस्रमितान्यावेदनपत्राणि प्राप्तान्यस्यैकस्य पदस्य कृते। तत्र बहुसंख्यकाः येऽभ्यर्थिनः समाहूतास्ते परीक्षणेषु प्रतिस्पर्द्धासु महतोत्साहेन प्रतिभागित्वं कृतवन्तः। अन्ततः ऐते सप्त महानुभावाः साफल्यसोपानमारुह्यान्तिमे चक्रे परीक्षणस्य प्रविष्टाः। असंशयमेते सुयोग्या अस्माभिः साधु परीक्षिताः। एतान् सर्वानभिनन्दामि। चयनप्रक्रियायां सर्वत्र पारदर्शिता स्थापिता। अनेनैव कारणेन शास्त्रपरीक्षणे सर्वेषां सप्ताभ्यर्थिनां सहावस्थानं कारितं न त्वेकैकस्य पृथक्-पृथक् परीक्षणम्। सर्वे सर्वेषामुत्तराणि शृण्वन्त्विति धियाऽस्मदेतादृग्योजनम्। भवन्तः सर्वे जानन्ति पदं त्वेकमेव। अतः सुयोग्येष्वपि योग्यतमो योऽस्ति स एव सम्मान्यं पदमेनमलङ्कर्तुमर्हति।" इत्येवमुक्त्वा इतस्ततो दृष्टिपातेन सर्वव्यापिनीमुत्कण्ठां समीक्ष्य स पुनरब्रवीत्-— "तथास्माकं नवः प्रधानार्चकोऽस्ति पण्डितराजश्रीशिवेन्द्रशर्ममहानुभावः।"

"स्वागतं स्वागतमभिवादनमि"ति हर्षसमेधितैः स्वरैः स समितिकक्षः प्रतिध्वनिभिर्मङ्गलानुमोदनं कृतवान्। सोऽपि शिवेन्द्रशर्मा स्वस्थानादुद्गतः

प्रधानार्चकस्य चरणावुपस्पृश्य सर्वानभिवाद्य गर्भगृहे गत्वा भगवन्तमाशुतोषं स्तुतिभिस्तोषयामास। पुनरागत्य स्वस्थाने समुपाविशत्।

अथ प्रदोषकाले नीराजनानन्तरं शैवशैलाधिपतेः सन्निधौ गर्भगृह एव नूतनस्य प्रधानार्चकपदप्रतिष्ठितस्य श्रीमतः पण्डितराज-शिवेन्द्रशर्मणः पट्टाभिषेकः वृद्धमहापुरुषेण प्रधानार्चकपदनिवृत्तेन सविधि विहितः। तेऽपि षडभ्यर्थिनः सबहुमानं कौशेयवस्त्रैः स्वर्णमुद्राभिश्च सत्कृताः पुरस्कृताः।

नवनियुक्तस्य प्रधानार्चकस्य पण्डितराजशिवेन्द्रशर्मणः ख्यातिरचिरमेव चतुर्षु दिक्षु व्याप्ता बभूव। शैवशैलमन्दिरविषये निजमनःशिवसङ्कल्पान् स न्यासपरिषदः समक्षं प्रस्तुतवान्। सर्वे सदस्या अधिकारिणश्च तान् सहर्षमनुमोदितवन्तः। ततस्तेनैका विस्तृता कार्ययोजना निर्मिता। तदनुसारं शिवरात्रिमहापर्वणः पुण्येऽवसरे कोटिरुद्रार्चनयज्ञः समारभत्। एतन्निमित्तं तेन सोमनाथविश्वनाथमहाकालादिद्वादशज्योतिर्लिंगानां प्रधानार्चकान् तत्रत्याँश्च शैवागमाचार्यान् महापण्डितान् क्रतुक्रियाशौण्डान् याज्ञिकानन्यांश्च शैव-सम्प्रदायाचार्यान् सादरं निमन्त्रयामास। ते तथाविधं निमन्त्रिताः सहर्षमनुष्ठाने भागं ग्रहीतुमागतवन्तः। यथायोग्यं सम्मानं सर्वसौविध्यभरमातिथ्यं चानुभूय ते सर्वे महानुभावा अतीव प्रसन्ना आसन्। अपूर्वमासीदेतादृशमनुष्ठानं तत्र। तेषां महानुभावानां धर्माचार्याणां सन्निधावेव शैवशैलपादमूले परस्परं समक्ष-मेकतः श्रीराममन्दिरस्याऽपरतः श्रीहनुमन्मन्दिरस्य निर्माणाय शिलान्यासोऽभवत्। दर्शनार्थिनां सौविध्याय मन्दिरं यावत्सोपानपरम्परां निर्मातुमपि कार्यारम्भोऽभवत्। सहैव च, गिरिमेखलावेष्टितराजमार्गनिर्माणमपि प्रारभत्। महादेवस्य प्रसादतः सर्वाणि कार्याणि निर्विघ्नानि सामोदं प्रचलन्ति। अनेन महदुपक्रमेण प्रधानार्चकस्य पण्डितराजश्रीशिवेन्द्रशर्ममहानुभावस्य शिवमयी धर्मनिष्ठा लोककल्याणभावना च प्रख्यापिता बभौ। धन्योऽयमाशुतोषः शिवः, यदा येन यत्कार्यं कारयितुं वाञ्छति, तत् कारयति। अनेन हि तस्मै प्रतिष्ठां यशश्च भूयो भूयः चिरं वितरति।

**ज्ञानं कर्म च भक्तिश्च मनुष्येष्वेव दृश्यते।**
**यस्मिन्नेतत्त्रयं विद्यात्स नरो दुर्लभो मतः।।१।।**
**ज्ञानकर्मपराभक्तिर्देवेऽनन्या गुरौ तथा।**
**भक्तः स पूजितो लोके सैव भक्तिर्महीयते।।२।।**

एकनिष्ठा भवेद्भक्तिः लोककल्याणभाविनी।
भगवत्पूजने सैव ह्यर्चकोऽधिकृतो मतः।।३।।
इदमेव कथावस्तु रुचिरं ह्यत्र वर्णितम्।
ज्ञानदम्भपरीतानां सर्वशोकापहारकम्।।४।।
मनो न शिवसङ्कल्पं नैव कल्याणभावितम्।
यस्य तेन कृता पूजा देवताभिर्न गृह्यते।।५।।
मुख्यार्चकनियुक्तौ या प्रक्रिया साधु स्वीकृता।
तद्दृष्टान्तं तु लोकाय शैवशैलस्य मन्दिरे।।६।।
यः पठेच्छृणुयाद् वापि सर्वात्मना कथामिमाम्।
देवपूजाहितं तत्त्वं विजानाति न संशयः।।७।।

●

## पुरस्कारः

अस्त्येवास्य विद्यालयस्य गौरवमयी परम्परा प्रतिवर्षं प्रदातुं सर्वोत्त-मच्छात्रपुरस्कारं तस्मै छात्राय यो वर्षपर्यन्तं समाचरत्यनुशासनं प्रदर्शयति च स्वीयां प्रतिभामद्वितीयाम्। पुरस्कारोऽयं विद्यालयस्य स्थापनादिवससमारोहे प्रदीयते। अस्य चयनविधिः सुगुप्तो भवति। सत्रारम्भत एव कक्षाध्यापकाः कक्षासु छात्राणामाचरणं योग्यतामुपस्थितिं परीक्षाफलं चाकलयन्ति। ततस्ते स्वीयं प्रतिवेदनं गोपनीयपुटके निधाय विचारार्थं चयनसमितौ प्रस्तुवन्ति। तत्र सदस्याः सम्यक् परीक्ष्यैकं योग्यतमं छात्रं पुरस्काराय चिन्वन्ति। इदमवितथं तथ्यं यदनेन पुरस्कारेण सभाजिताश्छात्राः सार्वजनिकजीवनस्य नैकेषु क्षेत्रेषु स्वकीयोपलब्धिभिः कीर्तिमानं स्थापयन्ति विद्यालयस्य च गौरवं वर्धयन्ति।

वर्षमिदमस्य विद्यालयस्य स्थापनायाः शताब्दीवर्षम्। अनया दृष्ट्याऽस्मिन् वर्षे दीयमानोऽयं पुरस्कारोऽतीव महिमाश्रयः। यथाऽस्माभिः श्रुतं, शताब्दीवर्षमहोत्सवस्य मुख्यातिथयो भारतराष्ट्रस्य महामहिमराष्ट्र-पतिमहोदयाः स्वकरकमलाभ्यामिमं पुरस्कारं प्रदास्यन्ति। गौरवमयं शतं वर्षं व्यतीत्याऽयं विद्यालयः सर्वतोभावेन शताब्दीमहोत्सवाय सज्जः। न केवलं विद्यालयपरिवारेऽपि तु क्षेत्रीयजनतासु महोत्सवं प्रति महानुत्साहो हर्षोल्लास-श्चानुभूयते। सर्वेऽभिलषन्ति महोत्सवमिमं चिरस्मरणीयं विधातुम्। यतो हीदं जनपदस्यैतिहासिकं पर्व। प्रबन्धने, पठने पाठनेऽनुशासने प्रतिष्ठितो लब्धकीर्तिरयं विद्यालयः। सर्वत्रास्य नाम सादरं सगर्वं च गृह्यते। स्वतन्त्रे भारते कस्यचिदपि राष्ट्रपतेरत्रागमनं प्रथममेवेति पुण्यतमोऽवसरः। न जाने कियन्तो गणमान्या

राजनेतारो विद्वद्वर्या वरिष्ठाश्च नागरिकास्तदानीमत्र समवेता भविष्यन्तीति कल्पनया जनानां विस्मयरोमाञ्चो भवति।

अस्य वर्षस्य 'सर्वोत्तमच्छात्रपुरस्कार:' कस्मै भाग्यवते छात्राय प्रदास्यत इत्यासीत्कुतूहलस्य विषय:। चयनसमितेर्निर्णयस्तु सुगुप्त आसीत्। सर्वे तर्कानुमानै: परिकल्पयन्ति स्म। प्रबन्धकस्य पौत्र एकादशकक्षायां पठति। प्रधानाचार्यस्य भ्रातृजोऽपि दशमकक्षाया विद्यार्थी। योग्यतया द्वावपि गण्यौ। अन्येषामपि नैकेषामध्यापकानां सम्बन्धिनो छात्रा: सन्त्येव। सुधालिप्तं धवलधवलं विद्यालयभवनं प्राङ्गणोद्यानै: सह सस्मिताननमिवातिथीनां स्वागतार्थं प्रतीक्षमाणस्तथौ। विद्यालयपार्श्वे क्रीडाङ्गणे सुविशालो बृहदाकारस्तोरणै: पताकाभिश्चालङ्कृत: सभामण्डप: सुसज्जित आसीत्। यथासमयं मुख्यातिथीनां महामहिमराष्ट्रपतिमहोदयानामागमनेन सह शताब्दीमहोत्सव: प्रारब्ध:। स्वागतविधिभिरन्यैश्च माङ्गलिकैरनुष्ठानैरायोजनमुखं मण्डितम्। तदानीं सभामण्डपस्य मञ्चस्य चाभिख्या काचिदपूर्वैवासीत्। स्वर्गस्य खण्डमेकं धरायामत्रापतितमित्यहो वर्णनातीतं नयनाभिरामं दृश्यम्! मध्ये मध्ये करतलध्वनि: सभास्थानं गुञ्जायमानं करोति। पुरस्कारवितरणप्रसङ्गे यथाक्रमं सर्वोत्तमच्छात्र-पुरस्कार उद्घुष्ट:। प्रस्तुतिं कुर्वाण: सञ्चालकवर्य: प्रथमं प्रशस्तिपत्रवाचनं कृतवान्- "मान्यमान्या:! अयं पुरस्कार: प्रतिवर्षं विद्यालयस्य स्थापनादिवससमारोहे प्रदीयते। अस्मिन् वर्षे त्वयमनुपमोऽवसर: स्मर्तव्य:। इदानीमेष: पुरस्कारो यस्मै छात्रायोपायनीक्रियते स एकादशकक्षायां पठति। अस्याभिभावका: सन्ति निर्धना ग्राम्याश्चक्रमृत्तिकासम्बन्धिन:। येयं दीपसम्मुखीना श्वेतपद्मासना लोभनीयविचित्रवर्णरञ्जिता वीणापुस्तकधारिण्या भगवत्या: सरस्वत्या: मृण्मयी प्रतिमा विराजते साऽनेनैव छात्रेण स्वहस्ताभ्यां निर्मायाऽत्रोपहृता। मृण्मूर्तिकलाकुशलोऽयं शिल्पकर्ममर्मज्ञश्छात्र:। यद्यपि स बहुमूल्यं वस्त्रं न परिदधाति किन्त्वतिसामान्यमपि तस्य वस्त्रं निरवद्यं भवति निर्मलम्। यथाकालं नियमितोपस्थिति: अनुशासनञ्च तस्य सर्वस्वम्। विनयावतार इव प्रतीत: स सदाचारपरायण:। मृदुभाषी च। सुमधुरं गायति। गुरवस्तं स्निह्यन्ति। प्रतिभावता तेन सर्वा: कक्षा: सर्वोच्चैरङ्कै: समुत्तीर्णा:। क्रीडासु समाजसेवासु स सदाऽग्रणी। संस्तुतानां समेषां छात्राणां पात्रतां साधु समीक्ष्यास्मै पुरस्काराय सर्वसम्मतं नामास्य संस्तुतम्। तच्छात्ररत्नमस्ति पङ्कजप्रजापति:।" 'साधु साधु" इति समवेतध्वनिभिस्सह करतलनिनादैर्नभोमण्डलं सम्पूरितम्। आहूत:

स लघुकाय: प्रतिभाप्रचाय: सद्गुणनिकाय: पङ्कजप्रजापतिर्विनयावनत: सर्वान् प्रणम्य हर्षोत्फुल्लनयनाभ्यां विकचराजीवोत्पलपुण्डरीकैर्दिग्विभागानाच्छादयन्निव मञ्चमारुह्य सप्रमाणपत्रं महर्घं पुरस्कारराशिं मुख्यातिथीनां करकमलाभ्यां सप्रश्रयं गृहीतवान्। पुरस्कृत: स छात्र आभारं प्रकटयन् प्रोवाच- ''माननीया:! कार्तज्ञं शिरसा वहामि। अस्य विद्यालयस्योन्नत्यै सर्वदा सर्वथा प्रयतिष्ये। भाविनि जीवनकाले यत्र कुत्रापि भवामि, विद्यालयस्य वार्षिकोत्सवे अवश्यमेव स्वकीयोपस्थित्याऽऽत्मसौभाग्यवर्धनं करिष्यामि। अयं पुरस्कारो न केवलं ममैवापितु, अस्य गौरवशालिनो विद्यालयस्य श्रद्धेयानां गुरुचरणानां विशेषतस्तु प्रधानाचार्यवर्याणां तथा च समेषामस्मत्सुहृदां प्रियवयस्यानां छात्राणामपि स्वीकरोमि। अस्मिन् पुरस्कारे श्रमस्वेदबिन्दुलसितौ समुल्लसितौ मे परमश्रद्धेयौ पितरौ प्रत्यक्षमिव विराजेते ययो: सङ्कल्पोऽस्ति- 'आत्मविक्रयेणापि पाठयिष्याव: सुतमिममिति।'' एभि: कार्तज्ञवचोभि: हर्षातिशयाद् गलदश्रु: स प्रकटित-विनयोऽपि पुन: पुन: शिर आनम्य समेषां समुपस्थितसभ्यानां प्रत्याभारं प्रदर्श्य मञ्चस्थान् विशिष्टशिष्टानभिवाद्य स्वस्थानमलङ्कृतवान्।

अत: परं सञ्चालकमहोदयेनातिविनीतस्वरेण मुख्यातिथिर्महा-महिमराष्ट्रपतिमहोदय उद्बोधनाय आशीर्वादप्रदानाय च ससम्मानमामन्त्रित:। सोऽपि स्वकीये सम्बोधने पुरस्कृतं छात्रं पङ्कजप्रजापतिं बहुधा सस्नेहं प्रशशंस- ''पङ्कजस्तु पङ्कज एव। पङ्काज्जातमपि कमलं कमलं न करोति? कमला कमले शेते। सरस्वती अपि कमलासना स्तूयते। द्वयोरपि शोभा कमलेनैव पङ्कजेनैव। एवमेव पङ्कजेऽपि पङ्कजत्वमायातु। लक्ष्मीसरस्वत्यो: द्वयोरपि वासभवनं भूत्वा द्वयोरप्यङ्के विलसतु। वस्तुतो यो मृत्तिकां स्निह्यति स मातृकामपि स्निह्यति। उक्तमेव श्रुतिभि:- ''माता भूमि: पुत्रोऽहं पृथिव्या:।'' अयं पङ्कजो निश्चप्रचं पृथिवीपुत्रो भूमिसूतो भूमिसुत:। अन्वर्थतां व्रजति पङ्कजस्याभिख्या। प्रीतोऽहं, सुप्रीतोऽहमेतादृशे मेधाविने छात्राय कल्पनाशीलाय च कलाकाराय स्वहस्ताभ्यां पुरस्कारं प्रदाय। एतादृशा: प्रतिभावन्तो नवयुवान एवास्माकं राष्ट्रस्य भाविन: कर्णधारा:। एते एव सत्प्रेरका: सन्त्यनुजातानाम्। भूयो भूयो नमस्करणीया भूमिरियं यत्रेदृशो गौरवशाली विद्याश्रम ईदृशं च छात्ररत्नं विराजेते। वन्द्यौ तौ पितरौ ययोरीदृशी सन्तति: प्रसूता संस्कारिता च। अहमत्र पुरस्कृतं पङ्कजप्रजापतिं पुनरपि पुरस्करोमि। एष: प्रिय: पङ्कजप्रजापति: यत्र यावच्च पठितुमभिलषति राष्ट्रपतिभवनं तस्मै सर्वसौविध्यं प्रदास्यति

तत्र तावच्च। मम पक्षतोऽयं राष्ट्रपतिपुरस्कारः। (करतलवादनपुरस्सरं हर्षोल्लास-कलकलः) अद्य मया प्रत्यक्षमेवानुभूतं यद्राष्ट्रस्यात्मा ग्रामेष्वेव प्रतिवसति। अत्रागमनेनाहमतीव प्रसन्नोऽस्मि। अहमनुरुणद्ध्मि पङ्कजप्रजापतिं पुनरप्येकां सरस्वतीप्रतिमां निर्मातुं यामहं तस्यैव करेण राष्ट्रपतिभवने स्थापयिष्यामि। आमन्त्रयामि च यथाकालं तेनैव सह तौ पितरावपि तत्रागन्तुम् इति।'' ततश्च नैके पुरस्काराः मञ्चे बद्धाञ्जलयः प्रकटिता इव। सभाध्यक्षः प्रदेशस्य माननीयो राज्यपालमहोदयः तस्याऽऽवासीयभवनं निर्मातुमादिष्टवान्। शिक्षामन्त्री तद्विद्यालयाय विशिष्टानुदानं स्वीकृतवान्। संसत्सदस्यः तस्मिन् ग्रामे सम्पर्कमार्गनिर्माणाय स्वनिधिं मुमोच। क्षेत्रीयविधायकः पङ्कजाय द्विचक्रिकायानमुपहृतवान्। एवमन्यैरप्यहमहमिकया पुरस्कारा उपहाराश्च प्रदत्ताः। कियत्कालपूर्वं यावद्यः पङ्कजप्रजापतिरनभिज्ञात आसीत् स एवेदानीं तस्य विद्यालयस्य सजीवः पुरस्कार इव सर्वप्रियः शोभते।।

सर्वथा समीचीनमेव प्राचां सूक्तम्—

**''विद्या-श्रमाभ्यां सकलार्थसिद्धिः।''**
**भारती पङ्कजे भाति लक्ष्मीर्वसति पङ्कजे।**
**कामये भारते भान्तु पङ्कजास्तु गृहे गृहे।।**

●

# विंशतिवितस्तिदीर्घा नासिका

आसीत् पुरा कस्मिंश्चिद् ग्रामे कोऽपि जराविपन्नः कृषकः। तस्य त्रयः पुत्रा आसन्। जीवनस्यावसानवेलायां स पुत्रानाहूय प्रोवाच- "प्रिया वत्साः, इदानीं मेऽस्माल्लोकात् प्रस्थानकालः समुपागत इति विभावयामि। यथासामर्थ्यं मया यूयं पालिताः। कुलक्रमागतेन कृषिकर्मणा युष्माकं साहाय्येनान्नमुत्पाद्य कुटुम्बभरणं मर्यादारक्षणं लोकपोषणञ्च कृतम्। अतः परमेतत्सर्वं युष्माभिः करणीयम्। यदि मम किमपि पुण्यं तद्युष्मान् पात्विति भगवन्तं प्रार्थयामि। सेवाप्रसादितेन केनापि साधुना मह्यं त्रीणि वस्तूनि प्रदत्तानि। तानि युष्मभ्यं प्रदातुं मे मानसाय रोचते। पश्यत, तत्र गृहैककोणे सा जीर्णकाष्ठमञ्जूषा दृश्यते। तामानयत। तस्यामेव तानि वस्तुरत्नानि सन्निधापितानि।"

पितृवचनमेतदुपश्रुत्य ते त्रयोऽपि भ्रातरः परस्परं मुखं विलोकयामासुः। अभिप्रायस्त्वासीत्- 'अहो, महदाश्चर्यम्! एतद्रत्नरहस्यवृत्तमस्माभिरतः पूर्वं कदापि न ज्ञातमि'ति। ज्येष्ठभ्रात्रा सविस्मयं सा मञ्जूषा समानीय पितुः पुरतः स्थापिता। तामुद्घाट्य स तानि वस्तूनि निःसारयामास। तत्र जीर्णानि वस्तूनि विलोक्य त्रयोऽपि पुत्राः "हुंः, कथमेतानि रत्नानि भवितुमर्हन्ती"त्युपेक्षया मुखानि विकृतीचक्रुः। वस्तुतस्तानि वस्तून्यासन्नेव तादृशानि- गोविषाणः, चर्मपुटकः कर्पटशिरस्कश्च। निष्क्रमणपरान् प्राणान् सम्प्रधार्य स कृषकस्तेषां वैशिष्ट्यमाख्यातवान् करे कृत्वा क्रमेणैकैकं वस्तु। प्रथमं गोविषाणं प्रदर्श्य प्रोवाच- "अस्मिन् मुखमारुतप्रयोगेनैव दानव एकः समुत्पद्यते। यस्य करे

शृङ्गं तस्यैव निदेशं परिपाल्य स विगलिताकारो भवति। अन्यत्कर्म कर्तुं पुनः ध्माते सति प्रादुर्भवति। यथापूर्वं कर्मैकं सम्पाद्य विलीनो भवति।'' अतः परं चर्मपुटकमग्रे कृत्वा जगाद- ''यदा यदा हस्तोऽस्मिन्निधीयते। तदा तदा मुष्टिभरं सुवर्णं करे समायाति। यद्यप्येतद्रिक्तमेव दृश्यत इत्यस्य वैशिष्ट्यम्।'' अन्ततः कर्पटशिरस्कमादाय स्वशिरसि न्यधात्। तत्क्षणमेव स सर्वेषां दृष्टेरविषयो बभूव। 'क्व गत' इति यावत्तस्य पुत्राः परस्परं साश्चर्यं पश्यन्ति तावत्सोऽप्यवादीत्- ''एतदेवास्य वैशिष्ट्यम्। यः कोऽपि शिरस्कमिदं शिरसि धारयति स तत्क्षणमेवाऽदृश्यो भवति। न कोऽपि तं द्रष्टुं प्रभवति किन्तु स सर्वं पश्यति। अस्य साहाय्येन कश्चिदलक्षितो भूत्वाऽभीष्टं सम्पादयितुं शक्नोति। एवं वस्तुत्रयस्य महिमानं प्रख्याप्य कियत्कालानन्तरं कुटुम्बसमक्षमेव प्राणान् तत्याज।

अथ कदाचिज्ज्येष्ठो भ्राता द्वावप्यनुजौ समाहूय स्निग्धवचसोवाच— ''तातस्तु कीर्तिशेषताङ्गतः। तेन प्रदत्तानि तानि त्रीण्यपि वस्तूनि तथैव तिष्ठन्ति। युवाभ्यां यद्रोचते तदङ्गीकुरुतम्।'' ततो मध्यमः प्राह— ''कनिष्ठोऽयमनुजः। यदस्मै रोचते तत्त्वयं प्रथमं गृह्णातु।'' एतच्छ्रुत्वा स्मितवदनः स तृतीयः कनिष्ठः कुमारश्चर्मपुटकमवृणोत् कर्पटशिरस्कञ्च मध्यमः। ज्येष्ठोऽवशिष्टं गोविषाणं प्राप्य तुतोष सुखञ्च मेने। पितृप्रदत्तेषु वस्तुरत्नेषु द्वावप्यनुजौ यथेच्छमेकमेकं वस्तु गृहीतवन्ताविति विश्रान्तमना स भार्यां न्यवादीत्- ''प्रिये, द्वावप्यावां सदारौ स्तः। केवलं कनिष्ठ एव निवेशार्थी तिष्ठति। अलसशिरोमणिः स नास्ति कर्मनिष्ठोऽध्यवसायी किन्त्विदानीं पूज्यपितृपादानां प्रसादात्तस्य नास्ति धनाभावः। यदि स चर्मपुटकस्योपयोगे विवेकं न त्यक्ष्यति तदा सुखं जीविष्यति। अतः काञ्चित्सुलक्षणां कन्यामनुरूपां विमृश्य तामनेन सहागामिनि सुलग्ने पाणिपीडनविधिना सुबद्धां करिष्यामि।''

एकदा कञ्चिदप्यनापृच्छ्य स कनिष्ठः कुमारश्चर्मपुटकमादाय निभृतं गृहान्निर्ययौ। महत्या युक्त्या तं चर्मपुटकं कञ्चुकान्तरे सङ्गोप्य शरीरस्य कटिप्रदेशे सुदृढं बबन्ध। बालस्वभावात्तस्य कल्पना पक्षयुता बभूव। निखिलभूमण्डलपर्यटनाय तस्य मनः समीहितवान्। ग्रामान्निर्गत्याऽलक्षितोद्देशः स एकस्मिन् दिशि प्राचलत्। ग्रामाद् ग्रामं, नगरान्नगरं पर्यटन् संयोगवशात्तस्य देशस्य राजधानीं प्राप्तवान्। तत्र सुचिरं पर्यटन् स राजानं द्रष्टुकामो राजप्रासादं गतवान्। राजप्रासादस्य तोरणद्वारे यानादवरुह्य यानचालकाय मुष्टिभरं निष्कं प्रददौ। राजभवनाट्टालिकागवाक्षे समुपविष्टा राजमहिषी तं

कुमारं तथा व्यवहरन्तं समुद्वीक्ष्य विस्मयविस्फारितनयना काञ्चिद्दासीमाहूयाऽऽदिष्टवती- "गच्छ, राजद्वारे स्थितं तं कुमारं सादरमत्रानय।" "यथाज्ञापयति भट्टिनी"ति सा सेविका ग्रामवेषं तं कुमारं द्रुततरमुपगम्याऽऽपादशिरसं निभाल्य महतादरेण स्वरेण प्रोवाच- "कुमार, मम स्वामिनी देशस्यास्य महाराज्ञी भवन्तं द्रष्टुं प्रासादान्तःपुरे प्रसीदति।" सहजसरलो निष्कलुषहृदयः सोऽपि नागरकौटिल्यादनभिज्ञः- "अहो, मम भाग्यम्! अस्य देशस्य साम्राज्ञी मां सभाजयती"ति महामोदचमत्कृतचटुलनयनो दासीवचनप्रत्ययात्तत्र गन्तुं स्वीचकार। ततः सा, "इत इतः कुमार" इति तं स्वामिनीं प्रति नीतवती। अन्तःपुरं प्रविश्य सोपानपरम्पराधिरोहणक्रमेणैवाचिन्त्यं राजवैभवं दर्शं दर्शं सविस्मयं स्मयमानस्तत्राट्टालिकायां कृतराजकक्षप्रवेशः, "कुत्राऽऽगतोऽस्मि! किमिदमेव स्वर्गम्!!" इति ध्यायं ध्यायं स्तब्ध इव, विमुग्ध इव तूष्णीकस्तस्थौ। "स्वागतं कुमाराय" इति मधुमधुरं श्रोतृपेयं स्वरं वचो निशम्य यावत्स दृष्टिं ध्वनिदिशि व्यापारयति तावत्तत्र सुखासनासीनां रत्नाभूषणभास्वरां सौन्दर्यसारस्थितां नन्दनवनश्रियमिव ललितलीलाललामां नयनाभिरामां रामां पश्यति। तस्या अनुभावमनुभूयाऽविदितपरिचयोऽपि स कुमारः केनाप्यज्ञातत्रासेनाऽनायासमेवाऽऽविष्टः। "एह्येहि, अत्रोपविश, मा भैषी, अहं तव जननीसमे"ति तन्मुखान्निर्गतैरक्षरैः स्नेहसूत्रैर्निबद्ध इव समाकृष्टः स उपचितविश्वासो गत्वा तस्याः पार्श्वे कथं कथञ्चिदुपविष्टः। सा तु तं कुमारमसामान्यं मन्यमाना स्वागतसपर्यया भृशं तोषयामास।

अथ विश्वासमुत्पाद्य सा राज्ञी मृदुस्वरेण तं पप्रच्छ- "भोः कुमार, त्वं तु निर्धन इव लक्ष्यसे। कथं तस्मै यानचालकाय मुष्टिभरं स्वर्णम्?" श्रुत्वा स बालको जहास- "कथमेवं भणसि? नेदं सत्यम्। आसीत्कदाचन निर्धनोऽयं जनः। परन्त्विदानीं कुबेरोऽपीर्ष्याकषायितलोचनः पश्यति। पश्य, व्यपनयामि ते कुतूहलमि"त्युक्त्वा कटिबन्धाच्चर्मपुटकं निस्सार्य तस्मिन् करं कृत्वा मुष्टिभरं निष्कमुद्धृत्य तस्याः करपुटेऽकरोत्। सोत्फुल्लनयना- "अहो, महदाश्चर्यमिदम्! जीर्णमेतच्चर्मपुटकं स्वर्णं वमति!! किमेवं कर्तुं त्वमेव शक्नोषि?" "नहि, नहि; यस्यापि करे चर्मपुटकमेतत्स्यात्, स सर्व एव प्रभवति"- निश्छलः स बालकोऽवादीत्। ताम्बूलरागरञ्जितरदना कपटस्मितवदना छादितछद्मच्छदना कृतकेकीकदना मायामृगमदना गर्हितगर्धगर्वगदना दारुणदम्भददना, नागरनर्मनदना कलिकलुषसदना राज्ञी रणितवीणारवेण स्वरेणाऽऽह- "किमत्र प्रमाणम्?" अदेशकालज्ञो बालो

धूर्तलोलुपलोमाशिकाया इव राजमहिष्याः कपटचातुरीमजानन् तत्क्षणमेव तं पुटकं कटिबन्धनाद्विमुच्य तस्याः करेऽकरोत्। क्रूरबुद्धिविलासिनी कुटिलहासिनी राजप्रासादवासिनी सा तस्मान्मुष्टिभरं स्वर्णमुद्धार्य कुमारस्य करे निक्षिप्य दासीमाज्ञापयामास- ''अपनयैनं, निष्क्रामय राजभवनात्।'' ''यथाऽऽज्ञापयति देवी''त्युक्त्वा दासी तं बालकं बलादाकृष्य राजमार्गेऽकरोत्। तस्योत्क्रोशे केनाऽपि मनागपि कर्णौ न दत्तः। क्रुद्धोऽप्यवशः स कथं कथञ्चित्स्वप्राणानादाय हतभाग्यः स्वग्राममागत्य निभृतं गृहं प्रविश्य तूष्णीकस्तस्थौ। तं दृष्ट्वा सर्वे हृष्टमानसाः- ''कथय रे, कुत्र गत आसीः? कथं खिन्नमना इव लक्ष्यसे?'' इति बहुधा पृच्छमाणोऽपि तस्मान्न किमप्युत्तरं लेभिरे। ज्येष्ठा भ्रातृजाया तं बहुतरं मानयति स्म, पुत्रमिव स्निह्यति स्म। सा सर्वान् दूरीकृत्य तं लालयित्वा सर्वं शनैश्शनैः पृच्छवती। ततश्च विदितवृत्तान्ता, 'अलं चिन्तितेने'ति तं सान्त्वयामास।

'धूर्तराज्ञीसकाशात्कथं तं चर्मपुटकं लप्स्य' इति स सदैव चिन्तयति स्म। अतीते खलु कियति काले, कुमारः कस्मिंश्चिद्दिने मध्यमां भ्रातृजायां प्रार्थयामास- ''भ्रातृजाये, कर्पटशिरस्कं मे देहि येनाऽहं तां धूर्तां दण्डयित्वा स्वीयं चर्मपुटकं पुनराददामी''ति। देवरस्य मुखदैन्यं विलोक्य, तस्य याचनाप्रकारमनुगृह्याऽऽर्द्रहृदया सा तच्छिरस्कं समानीय तस्य शिरसि न्यधात्। शिरस्कप्रभावात्कुमारोऽलक्षितः सञ्जातः। भ्रातृजायायाश्चरणयोः प्रणम्य स्वोद्देश्यसिद्धये स तत्क्षणं निर्ययौ। सोत्साहं गच्छन् केनचिदयत्ननीत इव स तत्र राजप्रासादं प्राप्य तमेव कक्षं जगाम यत्र सा धूर्तराज्ञी पुरोपविष्टाऽऽसीत्। किन्तु कक्षो निर्मक्षिक आसीत्। ततस्तामन्वेष्टुं दत्तदृष्टिः स कक्षात्कक्षान्तरं बभ्राम। एकस्मिन् भोजनकक्षे विविधैः सुगन्धिभिः सुस्वादुभिः पक्वान्नैः परिवृताऽशनव्यापारे व्यापृता सा लोचनगोचरीभूता। सोऽपि कुमारस्तत्रोपसर्प्य तस्थौ। सुवर्णपात्रेषु सुरम्यविधिना परिवेषितानि षड्रसोपेतानि पक्वान्नानि विलोक्य तेषां सुगन्धिभिर्नासिका सन्तृप्ता रसना चापि रसवतीमनुचिन्तनमात्रेण लालारसक्लिन्ना बभूव। क्षुत्पिपासार्तः स उदरभरणायात्मानं युयोज। शीघ्रमेव पात्रेभ्यो भोज्यवस्तूनि गतान्यदृश्यकरापहारविषयताम्। 'किमिदं महदाश्चर्य'मिति राज्ञी सेवकानाहूयाऽपि केनाऽप्यदृष्टसङ्कटेन भीता त्रस्तेव त्यक्ताशनाऽऽसने वेपथुमती शिथिलाङ्गी तस्थौ। जलं पायं पायमाकण्ठमशित्वा स कुमारो भोजनावशेषमितस्ततः क्षेप्तुमारब्धवान्। ततः सा राज्ञी महता भीतेन स्वरेण प्रोवाच- ''नूनमयं कोऽप्युत्पाती दुष्टात्मा। अस्य प्रसादनोपायो विचिन्त्यताम्।''

एतन्निशम्य स कुमारः साट्टहासं न्यवादीत्- "नाहं दुष्टात्मा। अहं तु स एव बालको यस्य चर्मपुटकस्त्वया लुण्ठितः। रे वञ्चनाव्यापारप्रवणे, प्रयच्छ सत्वरमन्यथा त्वां घातयिष्यामि।" कुमारस्यैतद्वचो निशम्येषत्समाश्वस्ता साऽञ्जलिं विरच्य प्रार्थितवती- "प्रसीद प्रसीद। ददामि ते चर्मपुटकम्। किन्तु क्वासि कथमलक्षित इति महन्मे मनसि कुतूहलम्।" दुर्दैवात्पुनः तस्या वचःपाशे पतितः स शिरस्कं शिरसोऽपनीय करे कृत्वा तामन्तिकं जगाम। "किं योऽप्येतद्धारयति स सर्व एव दृष्टेर्निर्विषयतां गच्छती"ति सहसा श्येनवत्प्रहृत्य तच्छिरस्कं स्वीये शिरोभागे विन्यस्याऽलक्ष्या बभूव। "आह, किमेतद्दुर्घटितमि"ति दुःखकातरः शोकावेगविद्धो विलुप्तसञ्ज्ञः स सहसा भूमौ पपात।

ततो विजयमुद्रां विधाय सा धूर्तराज्ञी सेवकानादिश्य तदवस्थं तं कुमारं बहिष्कृतवती। राजसेवकास्तमुत्थाप्य राजप्रासादाद्दूरं नीत्वा निर्जने स्थाने परित्यक्तवन्तः। किञ्चित्कालानन्तरं लब्धचेतनः स क्वाऽस्मीत्यपि न बुबोध। तस्य चेतसि तद्दुर्घटितं चलचित्रमिव चचार। कथंकथञ्चिदुत्थाय शनैश्शनैरविदितराजपद्धतिरपि स राजप्रासादं प्रति प्रस्थितवान्। आनुमानिकेऽपि मार्गे प्रचलन् स चिरादिव राजप्रासादं ययौ। तदानीं तस्य मनस्यासीत्- "राजानमुपगम्य सर्वं वृत्तान्तं निवेदयामि। यदि सत्यमेव स राजा तदा राज्ञीं दण्डयित्वा मह्यं तद्वस्तुद्वयमुपाहरिष्यति।" ततश्च राजद्वारं गत्वा राजदर्शनाय द्वारपालमनुनीतवान्। प्रतीहारिणस्तं नीत्वा राज्ञः समक्षमुपस्थापयामासुः। तेन निवेदितं सर्वं श्रुत्वा स राजाऽविश्वासमुद्रयोच्चैर्जहास। तमनादृत्य राजसभायाः निस्सारयामास। अबान्धवे तस्मिन्नगरेऽसहायो निरुपायः स नियतिं धिक्कृत्य स्वमपि भृशं निर्भत्सयामास। तदानीं तस्मै न किमपि प्रतिभाति स्म। खेदो ग्लानिर्लज्जा चेति सर्वाः सम्भूय तं पश्चात्तापाग्नौ क्षेपयामासुः। किंकर्तव्यविमूढ इव, "कथं गृहं गच्छतु? बान्धवाः किं वक्ष्यन्ति? तान् सर्वान् स कथं मुखं दर्शयिष्यती"त्येवं बहुधा विचिन्त्यापि किमपि निर्णेतुं न शशाक। निगडित इव, जडीभूत इव, निश्चेतन इव स नैराश्यतमःसागरे निमज्जनोन्मज्जनपरस्तस्थौ। ततश्च मन्थरपदन्यासैर्गत्वा कस्मिंश्चिज्जीर्णोद्याने क्षुत्क्षामकण्ठो निपत्य सुष्वाप।

अथ गतप्रायायां रात्रौ, समारब्धे खगकुलकलरवे, विगतनिद्रः स नेत्रे प्रमृज्य उत्थाय तस्थौ। गतदिने यद्दुर्घटितं तत्स्मारं स्मारं मनसि प्रतिशोधभावना तुषाग्निरिव प्रचण्डं जज्वाल। दृढं विनिश्चित्य ग्रामं प्रति प्रस्थितवान्। तत्र गत्वा, निशीथे निद्रानिमग्नेषु सर्वेषु, चौरवृत्त्या स्वगृहं

प्रविश्य गोविषाणं मुमोष। तमादाय ग्रामाद्बहिरेकान्ते स्थित्वा तस्मिन् मुखमारुतं प्रयुज्य दानवमाहूतवान्। सपद्येव तस्माद्दानवो निर्जगाम। कुमारस्तमादिदेश- ''बुभुक्षितोऽहम्। सुस्वादुभोज्यपदार्थान् शिशिरममलञ्च जलमानय।'' तत्क्षणमेव रुचिरं सर्वं तस्मै निवेद्य स दानवोऽलक्षितः। आहृतमाहारमातृप्तेरुपभुज्य जलञ्च निपीय कुमारस्तृप्तिं जगाम। किञ्चिद्विश्रम्य पुनस्तेनैव विधिना दानव आहूतः। ''मां राजधानीं प्रापये''ति दानवं समादिदेश। अचिरादेव दानवस्तं स्वस्कन्धमारोप्य राजधानीं नीत्वा राजप्रासादसमीपेऽव-तार्यान्तर्दधौ। पुनस्तथैवाहूतो दानवः शिरसा प्रणम्य तमुवाच- ''करणीयमादिशतु स्वामिन्!'' कुमारेणादिष्टम्- ''अस्मिन्नेव क्षणे सुसज्जितामपराजेयां दुर्धर्षपदातियोद्धामयीं गजवतीं जवतीव्रहयां चमूं व्युत्पाद्य राजधानीं राजप्रासादञ्च सुदृढमवरुद्ध्य माञ्च वीरवेषं कृत्वा राज्यस्यास्य सकलं सैन्यबलं मायामुग्धं विधाय विगतसंज्ञं कुरु।'' ''यथाज्ञापयति कुमार'' इति तस्योक्तिमात्रेण तत्सर्वं तथाभूतम्। सहसा सैन्यसञ्चलनकोलाहलं श्रुत्वा सर्वेऽपि राजधानी-वासिनोऽपगतनिद्राः 'केयं विपत्तिरिति' भयातुरा बभूवुः। 'कोऽप्यमभिनवशत्रुरिति' राजकुले क्रोधभयत्रासानां पराकाष्ठाऽऽसीत्। स्थानस्थिताः प्रतीहारिणोऽपि मूर्च्छिताः का कथा सैन्यबलस्य?

कुमारस्त्वतीव प्रसन्न आसीत्। वीरवेषमण्डितं स्वं पुनश्च सैन्यव्यूहं दर्शं दर्शं तस्य नेत्रे अपूर्वोल्लासेन चमत्कृते। अद्य चर्मपुटकं शिरस्कञ्च प्राप्यैव विरमामीति दृढसङ्कल्पः स एकं सैनिकं दौत्यकर्मणे प्रहिणोत्। स गत्वा राजानं निवेदयामास- ''राजन्, तव भार्यया मम स्वामिनो द्वे रत्ने अपहृते। प्रयच्छ ते अन्यथा ते सर्वनाशं करिष्यति स्वामी।'' ''कस्तव स्वामी? का कथा रत्नयोः?'' सविस्मयं पृष्टवान् राजा। ''राज्ञी सर्वं जानाति''-प्रत्युवाच दूतः। तत्रस्था राज्ञी किञ्चित्स्मृत्वा प्रोत्फुल्लनयनाऽब्रवीत्- ''मन्ये, सोऽयं कुमारः। गच्छ, सादरमानय स्वकं स्वामिनम्। मे वचनान्निवेदय- 'रत्ने दास्यामीति'।'' ततः स दूतः प्रतिनिवृत्य कुमारं विदितवृत्तान्तमकरोत्। ''जितमस्माभिरि''ति हुङ्कृत्य चर्मपुटकशिरस्के हस्तगत इति मन्यमानः स कुमारो विषाणं करे कृत्वा वीरोपमविलासेन सिंहशावकगमनेन राजप्रासादं प्राविशत्। तमवलोक्य राजा हतप्रभ आसीत्। सोऽयं कुमारो यो मयाऽर्धचन्द्रं दत्वा राजसभायाः निष्कासितः। अद्यायं मे प्राणान्न त्यक्षती''त्यनुचिन्त्य भीतः स तूष्णीकस्तस्थौ। कपटलीलाधारिणी क्रूरकर्मकारिणी राजमहिषी तं कुमारं दृष्ट्वा सस्मितं स्वागतं व्याजहार- ''कच्चित् कुशली कुमारः? कुत

इदं सैन्यबलम्? अरे, कथं त्वं निजकरेऽपवित्रं पशुशृङ्गं धारयसि?" कुमारः सगर्वं प्राह- "अस्य बलेनैवेदं सैन्यबलम्। कथय, अद्यापि दास्यसि मे वस्तुनी न वा?" "दास्यामि, दास्यामि। उपविश तावत्। यदि मया ते चर्मपुटकशिरस्के न गृहीते तदा कथं तवेदं रूपं विज्ञातं स्यात्? तव रूपं, बलं समृद्धिं च दृष्ट्वा, राजदारिकायाः पाणिपीडनं त्वयैव सहेति मया सङ्कल्पितम्। अधुना त्वेतद्राज्यमपि तवैव" इत्युच्चार्य सा तस्य समीपं गत्वा महता स्नेहेन शिरसि करं व्यापारयामास। सोऽपि कुमारस्तस्याः कपटलीलां नावबुद्ध्याऽनवधानतया तया विजल्पितं सर्वं सत्यमिव मेने। कुमारस्य तदानीन्तनं मनोभावं निपुणं परीक्ष्य समाश्वस्ता सा दुर्भावभरितमानसा राजमहिषी तडिद्वेगात् झटिति तस्य करात् गोविषाणमपहृत्य तं निबद्धुं सेवकानादिदेश। यावत्स कमपि प्रतीकारं कुर्यात्तावद्राजपुरुषैः निगडितः। राज्ञी गोविषाणं प्रयुज्य समुपस्थितं दानवमाज्ञापितवती- "इदं मायासैन्यबलं सत्वरमपाकुरु। ततश्चेमं कुमारं सुदूरं नीत्वा कस्मिंश्चिन्निर्जने वने नभसः पातय येनायं पञ्चत्वं यात्वि"ति।

अथ सैन्यबलं संहृत्य कुमारं गृहीत्वा दानवः खमुत्पपात। गोविषाणस्वामिनो निदेशकारी सन्नपि स कुमारं प्रति दयालुरासीत्। अतो राजधानीतः किञ्चिद्दूरं नीत्वा तमेकस्मिन् वनखण्डे मुक्त्वा स्वयं प्रणष्टः। तं वनमाहिण्डमानः स बालकः क्लान्तः श्रान्तः कस्यचित्तरोर्मूले निषण्णः क्षुत्क्षामकण्ठो भृशं रुरोद। तत्र तस्यारण्यरुदितं कः शृणोतु। हा दुर्दैवहतक, मया ते किमपकृतम्? रे प्रारब्ध, कस्य जन्मनो वैरं साधयसि? अयि नियतिदुष्टे, मम भाग्यं कथं कवलीकरोसि? हे प्रजापते, मम ललाटे त्वया किं लिखितम्? हा मातः, जन्मकाल एव कथं नाहं त्वया हतः? वसुधे, विदीर्णा भव देहि मे शरणम्। वनदेवते, त्राहि मां त्राहि मामि"त्येवं बहुधा विलप्य शनैश्शनैः प्रकृतिस्थो बभूव।

ततश्च पराजितद्यूतकर इव व्यथमानः स स्वीयां हतभाग्यतां सुचिरं निनिन्द। दुष्कृतस्य फलं राजमहिष्यै ध्रुवं देयमिति परमक्रोधावेशविवशोऽपि स कमप्युपायं निश्चेतुं न शशाक। हिंस्रजन्तुसङ्कटापन्ने घोरविपिने प्राणरक्षा क्षुधाशान्तिश्च कथं भवेदिति चिन्तातुरो वनस्य पारं गन्तुमुच्चचाल। कानिचित्पदानि गत्वैव स यावदुर्ध्वं पश्यति तावत्समक्षमेकस्मिन् वृक्षे रक्तवर्णानि सुललितानि स्थूलमुक्तासन्निभानि फलानि तस्य रसनां लालासिक्तां कुर्वन्ति स्म। बुभुक्षितः

किं नाचरति? सोऽपि वृक्षमारुह्य फलगुच्छकान्यादाय मधुराणि तानि फलानि महतादरेणाकण्ठं भक्षयामास। फलोपभोगेन तस्य बुभुक्षापिपासे शान्ते बभूवतु:। परंतोषंगतस्य तस्य मति: प्रतिशोधपरा समजायत। हन्त, किमिदं! याममात्रमिव व्यतीते काले स प्रतिश्यायपीडितोऽभूत्। यावत्स नासिकां परामृशति तावत्सा वर्धमाना प्रतीता। नातिचिरेण सुमहतीं वृद्धिं गता तस्य नासिका सोढुं वोढुं च दुर्भरा जाता। एकस्मिन् वृक्षमूले समासादितस्य तस्य सुदीर्घघोणावंशस्याग्रभाग: पुरत: स्थितस्य वृक्षस्य स्कन्धेऽवलम्बित:। भग्नाश: सङ्कटापन्नो निरुपाय: स स्वीयां विकृताकृतिमनुभूय शिरोधूननमकरोत्- "रे दैवहतक! मया ते किमपकृतम्? कस्यापराधस्य दण्डं ददासि? रे दुर्भाग्य! कुत्र मां निपातितोऽसि? हा, कथं धैर्यं धारयामि? रे नियतिदुष्टे! विपत्पयोधौ निमज्य कथं मां घातयसि? कथं मामीदृशीं दुर्दशां प्रापयसि? भवतु नाम शोभनं यदि मे प्राणानेवापहर। किमिदानीं वृथा जीवितेन? हा तात, किमर्थं त्वयाऽन्त-कालेऽस्मभ्यमेतानि वस्तूनि समुपहृतानि? कस्य जन्मनो वैरं त्वया साधितम्?"- इत्येवमन्यान्यपि बहुधा विलपितानि। अस्तङ्गते भगवति भुवनभास्करे, दिवसावसानसमये पश्चिमदिशि गगनं सन्ध्यारुणं वीक्ष्य, रात्रौ हिंस्रजन्त-वोऽवश्यमेव मां कवलीकरिष्यन्तीति कल्पनामात्रेणैव तस्योदञ्चरोमराजिकाये भयमाविवेश। तदैव, नातिदूरं स्थण्डिलपतितेषु पर्णेषु पदक्रमात् समुत्थो मर्मररव: श्रुत:। तच्छब्दश्रवणमात्रेण तस्य मन: पिप्पलपत्रमिव चकम्प। 'नूनमेव वन्यजन्तुच्छलेन साक्षाद्यम एवागच्छती'ति सातिशयभीत्या तस्य नेत्रे स्वयमेव निमीलिते। क्रमेणोपजायमानो मर्मरध्वनिस्तमन्तिकमवसन्न:। 'कथं नायं मां प्रहरती'ति कण्ठगतानपि प्राणान् सम्प्रधार्य यावन्नेत्रे किञ्चिदुन्मीलयति तावत् स्मेरमुखो भासितभूतिशरीरस्त्रिशूलधारी त्रिशूलहारी मूर्तिमान् शङ्कर इव जीवदयाव्रती कोऽपि यती रोध इव भयस्य दृष्ट:। तस्मिन्निर्जने वने तं यतिवरं दृष्ट्वा स आत्मानं पुनरुज्जीवित इवानुभवति स्म। तं बालकं तस्यां दुरवस्थायां पतितं दृष्ट्वा परमकारुणिक: स वितस्ति-विस्तारेण नासिकादैर्घ्यं मापयित्वा कान्यप्यन्यानि फलानि समानीय गणनापूर्वकं तं भोजयामास। महता वात्सल्येन तमाश्वासयन् तत्रैव तस्थौ। प्रायेणार्धहोरामिते काले व्यतीते सति तस्य नासिका शनैश्शनैरपचीयमाणा स्वीयां मूलामाकृतिं समवाप। प्रसन्नवदन: स यतिवरस्य पादयोर्निपत्य तस्थौ। परमप्रीत्या सोऽपि तमुत्थाप्य, समाश्वास्य ततो नातिदूरेऽवस्थितायां पर्णशालायामानीतवान्। तत्र कृतफलमूलाहारप्रणय: सुस्थित: स सर्वमात्मवृत्तं निवेद्य दयानिधानं तं

यतिवरं प्रपच्छ कमप्युपायं तद्धूर्तराज्ञीसकाशाद्रत्नत्रयस्यावाप्तेः। "श्रान्तोऽसि, शयनं कुरु। अपरेद्युः सुकरमुपायं ज्ञास्यसी"ति यतिवरस्तं प्रबोधितवान्। किन्तु श्रान्तस्यापि तस्य नेत्रयोर्निद्रायाः लेशमात्रमपि नासीत्।

प्रत्यूषकाले प्रातःकालिकं कृत्यं निर्वाह्य स बालको मुनेरन्तिकं सविनयमुपससर्प। प्रथमं मुनिरुपायतया तस्य वेषाकारमीदृशं परिवर्तितवान् यत्सोऽपि परिचितेनाऽपि कृच्छ्रादिवाभिज्ञातो भवेत्। ततस्तस्मै द्विविधफलयुतं करण्डकं समर्प्य निर्दिष्टवान्- "पश्य, द्विधा विभक्तानीमानि फलानि। अनेन रक्तफलेन नासिका वर्धते पुनरनेन पीतफलेन वर्धिता नासिकाऽपचीयते। अधुना क्षणादेवाऽहं त्वां राजप्रासादसमीपे स्थापयामि सिद्धिबलेन। तत्रेमं फलकरण्डकमादाय राजमहिष्या गवाक्षपथे स्थितिं विधेहि। सा धूर्तराजमहिषी रक्तफलानि दृष्ट्वाऽवश्यमेवास्वादलोलुपा त्वामाकार्य सर्वाणि फलानि क्रेष्यति। अनेन तव कार्यं सिद्धमेव। यावदधिकानि फलानि तया भुज्यन्ते तावदेव तस्याः नासिका वृद्धिं यास्यति। अनन्तरं चोपचारार्थं गत्वा तानि त्रीणि वस्तून्यादायैव तस्याः नासिकां मापयित्वा यावद्वितस्तिमितं दीर्घत्वं तावत्सङ्ख्यकानि पीतफलानि तां भोजयेति।"

यतिवरवचनमवधार्य तत्साहाय्येनाचिरमिव राजधानीं गतः स यथोपदिष्टं चकार। सा राज्ञी गवाक्षात्तानि फलानि दृष्ट्वा लुलुभे। दासीमुखेन तमनभिज्ञेयं बालकमाहूय तानि रक्तफलानि स्वल्पमुद्रयैव क्रीतवती। स्वल्पसङ्ख्यकान्यन्येभ्यो दत्त्वाऽवशिष्टानि सर्वानि स्वादूनि फलानि स्वयमेव बुभुजे। किञ्चित्कालानन्तरं प्रतिश्यायबाधापीडितायास्तस्याः नासिका वर्धितुमारेभे। पर्यङ्कस्थायाः राजमहिष्याः नासिका सुदीर्घत्वमापन्ना कक्षाच्छदिं पस्पर्श। अन्यैर्यैरपि तत्फलं भुक्तं, सर्वेषामेवेदृशी दशा बभूव। राजमहिष्याः दासीवर्गस्य चेदृशीं दुर्दशां वीक्ष्य राजान्तःपुरं महति शोकतमसि निमग्नम्। राजाप्येतन्निशम्य त्वरितपदमाजगाम। तथाभूतां राजमहिषीं विलोक्य शोकातुरः सन् राजवैद्यं समाहूय तस्या उपचारार्थं समादिदेश। राजवैद्यस्तु शास्त्रपद्धतिमनुसृत्य नानाविधैरुपायैर्यथाज्ञातौषधिप्रयोगैरपि तं नासोपद्रवमुपशमितुं न शशाक। अन्ततो निरुपायो लज्जावनतमुखस्तस्थौ। ततो निखिले राज्ये राजघोषणा प्रसारिता- "योऽपि राजमहिष्याः नासिकामुपचार्य तां पूर्वावस्थां नेष्यति तस्मै महाराजो यथाभिलषितं प्रदास्यती"ति। इयं घोषणा तस्य बालकस्यापि श्रुतिपथं समारूढा। स त्वस्यैव क्षणस्य प्रतीक्षायामासीत्। पीतफलान्यादाय करण्डके सङ्गोप्य

राजप्रासादमुपससर्प। तत्र गत्वा राज्ञीं निरीक्ष्य परीक्ष्य च राजानमुवाच— "अहमेवैको यो राज्ञीमस्माद्विपत्पयोधेः समुद्धर्तुं शक्नोति। केवलमयं जन एवास्य रोगस्योपचारं जानाति। किन्त्वुपचारारम्भात्प्रागेवाहं तानि त्रीणि वस्तूनि वाञ्छामि यानीयं राज्ञी तस्माद् ग्रामबालकाद् बलादादाय तिष्ठति।"

एतच्छ्रुत्वा सा राज्ञी सव्यथं किञ्चिदुच्चैरुवाच- "आरोग्यतां देहि मे प्रथमं ततस्तुभ्यं तानि वस्तूनि दास्यामि।" "नहि, नहि; तानि वस्तूनि करे कृत्वैवोपचारं करिष्यामी"ति बालकस्य विनिश्चय आसीत्। कुमारकृतनिबिडनि-र्बन्धबन्धविवशेन प्रबलेनाऽप्यबलाजनेन सङ्केतितं वस्तुगुप्तिस्थानमुपगम्य राजा तानि वस्तून्यादाय तस्मै बालकाय समर्पयामास। पित्र्युपहृतं रत्नत्रयं पुनरपि समवाप्य परं प्रीतः स बालको राजमहिष्याः दासीजनानाञ्च नासिकाः मापयित्वा तदनुसारं पीतफलानि भोजयामास। तदानीं भुक्तफलप्रभावेण राजमहिष्याः नासिका तु विंशतिवितस्तिमिता दीर्घाऽऽसीत्। अचिरादिव सर्वासां घोणावंशः शनैश्शनैः ह्रस्वाध्रस्वतरो भूत्वा मूलरूपताङ्गतः। विगते विकटेऽस्मिन् सङ्कटे राजपरिवारो मोदनिर्भरो जातः। तस्मिन् समुल्लासमये समये स बालको नु क्व गत इति न केनापि विदितम्। राजवैद्यस्य तु रोगोपचारौषधिरहस्यज्ञानविषयिणी समीहा हतैव। राजा राजमहिषी च पश्चात्तापेन भृशं दग्धौ। तं बालकं खल्वन्वेष्टुं राजपुरुषानादिष्टवन्तौ।

स बालकस्तु तदा कर्पटशिरस्कं शिरसि निधाय ततोऽलक्षितो बभूव राजप्रासादाच्च निर्गत्य विषाणोद्भूतदानवबलेन शीघ्रमेव स्वगृहं ययौ। तत्र सर्वे तं कुशलिनं समागतं वस्तुरत्नत्रययुतञ्चावलोक्य परं प्रहर्षं जग्मुः।

अथ स राजा तं कुमारमन्विष्य कुटुम्बिभिस्सह सबहुमानपुरस्सरं राजप्रासादं समानीय तस्मै राज्यं राजदारिकाञ्च समर्पयामास॥

**समाजे जीवने चापि या शुश्रूषा विराजते।**
**तन्मूलं तु कथा नित्यं रम्यवस्तुरसान्विता॥१॥**
**कथारसानुरक्तानां बालानां च विशेषतः।**
**करोति सुमतिं प्रीतिं कथेयं लोकसंश्रया॥२॥**
**सुधीमनःप्रसादाय लोकस्याराधनाय हि।**
**बालानां सुखबोधाय प्रस्तुतेयं कथाप्रथा॥३॥**

●

## उद्यमिनौ बालकौ

पुराकाले क्वचिन्नगरे कस्मिंश्चिद्वैश्यकुले एकः पुत्रो जातः। दुर्दैववशाज्जातस्य तस्य पितरौ दिवङ्गतौ। 'कुलक्षणोऽयमि'ति मत्वा बान्धवैः स परित्यक्तः। दयया काचिद् गृहकर्मकारिणी दासी सवात्सल्यं तं पुपोष। जाते वयसि सा तं सामान्यतः शिक्षयामास प्रबोधयामास च- ''वणिक्पुत्रोऽसि। नाहं तव जननी अपितु गृहकर्मकारिणी दासी। तव पितरौ जातमात्रं त्वां परित्यज्य दिवङ्गतौ। हतभाग्यं त्वां कुलक्षणमिति मन्यमानाः बान्धवा अपि तत्यजुः। एवं तिरस्कृतं परित्यक्तं च त्वामहं ते धात्री भूत्वा कथंकथञ्चित्पोषितवती। इदानीं सज्ञानोऽसि। अतः परं किं कर्तव्यमिति त्वया साधु विचारणीयमि''ति।

धात्रीवचनं श्रुत्वा स वणिक्पुत्रो मनसि विचारयामास- ''बान्धवाः मां तिरस्कुर्वन्ति। नाहं तान् स्वीयां पैतृकीं सम्पत्तिं याचितुं गच्छामि। भवेन्नाम, लोभोपहतचेतसस्ते क्रूरमानसाः मे प्राणानेवापहर्तुं प्रयत्नपराः स्युः। अतस्तत्र गमनं नोचितमि''ति।

'किं करणीयमि'ति विचिन्तयन् स एवमेवेतस्ततो नगरे भ्रमति स्म। एकदा तस्य मनस्यायातं यत् कञ्चित् श्रेष्ठिनमुपगम्य तस्माद् ऋणं व्यवहृत्य निजं व्यवसायं साधयामि। एवं विचार्य प्रसन्नमनसा स एकस्य श्रेष्ठिवर्यस्य द्वारदेशं गत्वाऽपि भीतिसङ्कोचवशाद् द्वारि एव तस्थौ। 'मह्यमनाश्रयाय बालकाय ऋणं को दास्यती'ति तत्राप्यवमाननाशङ्कितो

यदा स प्रत्यावर्तितुं मनश्चक्रे तदैव तस्य दृष्टिस्तत्रैव द्वारोपान्ते स्थितस्य मृतमूषकस्योपरि निपपात। अविलम्बमेव स तं मूषकं पुच्छेन प्रगृह्य करे कृत्वा श्रेष्ठिनमुपगतवान्। तमेवमायान्तं दृष्ट्वा श्रेष्ठिवर्यः पृष्टवान्- "को भवान्? किमनेने"ति?? स बालकः सहजतया प्रोवाच- "श्रीमन्, अनाथो वणिक्पुत्रोऽस्मि। व्यापारं कर्तुमनाऽहं भवतः सकाशादिमं मृतं मूषकं ऋणमिति कृत्वा नयामि। कालेऽस्य कुसीदस्य प्रत्यर्पणं करिष्ये। भवान् मम नामतो लेखाङ्कितं करोत्विदं ऋणम्।" स श्रेष्ठिवर्यो विहस्य प्रोवाच- "नयतु, नयतु। अस्य व्यवहारलेखा नोचिता। नाहमिमं मृतं मूषकमात्मनो मन्ये।" स बालकस्तं श्रेष्ठिनमभिवाद्य ततो निर्जगाम।

मार्गे कश्चिज्जनः स्वपालितविडालस्य कृते आहारं क्रेतुं गच्छति स्म। स तं वणिक्पुत्रमपृच्छत्- "कथं मृतं मूषकं नयसि?" बालकस्तमब्रवीत्- "विक्रेतुं नयामि।" स विडालपालकस्तस्मै मूल्यं दत्वा तं मूषकं क्रीतवान्। ततः स बालको मूल्यमितेन तद्द्रव्येण गुडं क्रीत्वा नगराद्बहिर्गत्वा तत्र काञ्चित्प्रपां दृष्ट्वा तत्र गुडं निधाय तस्थौ। तेनैव मार्गेण वनात् काष्ठभारकाः काष्ठेन्धनं विक्रेतुं नगरे प्रविशन्ति स्म। ते तत्र भारमवतार्य क्षणं विश्रम्य जलं पीत्वा ततोऽग्रेसरन्ति स्म। तत्र तस्मिन् प्रथमदिने स वणिक्पुत्रो गुडं विक्रीय द्विगुणं लाभमर्जितवान्। अपरेद्युः तेन समर्जितेन धनेन पुनरपि गुडं क्रीत्वा तत्र गत्वा तथैव चकार। मासान्तरे स गुडेन सह चणकानन्यानि च खाद्यवस्तूनि तत्र विक्रेतुमारब्धवान्। एवं स लाभार्जितं धनं पुनः-पुनः संयोज्य प्रतिदिनं तेन लाभांशेन काष्ठसम्भारं क्रीत्वा क्रीत्वा तत्सञ्चयेन सुमहान्तं काष्ठराशिं चकार। वर्षाकाले यदा वनात्काष्ठेन्धनस्यापूर्तिर्बाधिता तदा सञ्चितस्य काष्ठेन्धनराशेः विक्रयेण तेन सुमहद्धनं समर्जितम्।

अथैकदा स वणिक्पुत्रस्तत्तुल्यभारं स्वर्णमयं मूषकं कारयित्वा तं श्रेष्ठिवर्यमुपगम्य प्रोवाच- "भो महाजन! कृतज्ञोऽस्मि। स्मरतु भवान्। मया ऋणमिति कृत्वा भवद्द्वारदेशादेको मृतो मूषकः कियत्कालपूर्वं नीतः। तन्मूलधनमद्य लाभांशेन संयोज्य प्रत्यर्पयामि। प्रसीदतु, गृह्णात्विमं तत्तुल्यभारं स्वर्णमयं मूषकम्। करोतु माम् ऋणमुक्तम्।" श्रेष्ठिवर्यस्तं स्वर्णमयं मूषकं तञ्च वणिक्पुत्रं सुचिरं निर्वर्ण्य प्रहृष्टमनसा परमप्रीत्या तं कुमारमभिनन्द्य कण्ठेनाश्लिष्य भूयांस्याशीर्वचांसि प्रयुज्य, तस्य बुद्धिवैशद्यं, वाणिज्यपटुत्वं,

व्यवहारकौशलं, दृढसङ्कल्पञ्च सुनिपुणं विज्ञाय तमुद्यमिनं बालकं तनयतुल्य-मङ्गीकृत्य प्रथमं तु नैजे व्यवसाये सहभागित्वं परिकल्प्य तस्मै रूपगुणशील-शोभासम्पन्नां स्वीयां कन्यां सङ्कल्प्य जामातृरूपेण तं वरयामास।

अस्यैव पुरावृत्तस्य नवीनं सत्यसंस्करणं सावधानमनसाऽधुना श्रोतव्यम्। कदाचित्क्वचिद्हट्टवीथिकायां गच्छतः कस्यचित्साधुपुरुषस्य कर्णयोः दीनार्तशब्दा आपतिताः- ''अस्मै दुर्दैवहतायाऽनाथाय किञ्चिद् देहि; क्षुधार्तोऽस्मि; परमेश्वरस्तुभ्यं कल्याणं प्रदास्यती''ति। सकरुणं दीनं वचः श्रुत्वा सोऽपि महाभागः परावर्त्य यावत् पश्यति तावद् बालोऽपि दारिद्र्यक्लिष्टो याचकविशिष्टः कुलायमाणालकः शून्यनेत्रो नेत्रपथ आयातः। स साधुपुरुषस्तं बालकमुपसर्प्याऽपृच्छत्- ''कथं याचसे? श्रमेण वृत्तिं लभस्व।''

स बालकः कातरदृष्ट्या विलोक्याऽब्रवीत्- ''न कोऽपि मां नियोजयति। बहुधा प्रयत्नं कृत्वाऽपि तिरस्कृतोऽस्मि। न कश्चिद् विश्वसिति।''

स पुरुषः पुनरब्रवीत्- ''चेत्तुभ्यं द्वौ पणकौ ददामि!''

बालकस्योत्तरमासीत्- ''अद्य पुनर्न याचे।''

पुरुषः- ''चेत्तुभ्यमेकमाणकं ददामि!''

बालकः- ''तदा दिनद्वयं न याचिष्ये।''

पुरुषः- ''यदि तव हस्ते चतुराणका भवेयुः।''

बालकः- ''यद्येवं, तर्हि सप्ताहपर्यन्तं न याचिष्ये।''

पुरुषः- ''यदि तुभ्यं रुप्यकमेकं ददामि!''

अनेन प्रश्नेन सहैव भिक्षुबालकस्य धैर्यमपगतम्। सकरुणं स प्रोवाच- ''महाशय, केवलं मामुपहससि। यदि सत्यमेव दातुमभिलषसि, देहि किञ्चित्। क्षुधार्तस्य मे न किमपि प्रतिभाति। लोके सन्ति बहवः कुतूहलिनो मादृशाश्च नैके बालकाः। अतः कृपया मुञ्च माम्। दैव एव मे सहायः।''

स पुरुषस्तु सलज्ज इव सान्त्वयामास- ''कथमन्यथा मन्यसे? अहमवश्यमेव तुभ्यमेकं रुप्यकं दास्यामि। ब्रूहि, तेन किं करिष्यसि?''

एतच्छ्रुत्वा बालकस्य नयनयोराशाज्योतिः प्रादुरासीत्। प्रोल्लसद्वाचा स जगाद- ''यदि सत्यमेव रुप्यकमेकं दास्यसि तदा भिक्षावृत्तिं सर्वथा त्यक्ष्यामि। चतुराणकान् सप्ताहपर्यन्तं भोजनाय निक्षिप्य शेषैर्द्वादशाणकैः

यथासुलभं वस्तु क्रीत्वा तद्विक्रयेण दिनानुदिनमाजीविकोपायं प्रवर्तयिष्यामि।''

ततस्तस्य वचनेन प्रीतः स पुरुषस्तस्य करे रुप्यकमेकं निधाय यथाभिलषितं जगाम। सोऽपि बालस्तस्मिन्नेव दिने तैर्द्वादशाणकैः फलानि क्रीत्वा तद्विक्रयेण सपादरुप्यकमर्जितवान्। एवं दिनानुदिनं फलक्रयविक्रय-व्यापारेण मूलधनस्य सततं वृद्धिं कुर्वन् फलस्यैकां विपणिं स्थापितवान्। श्रमनिष्ठया निर्लोभवृत्या साधुव्यवहारेण च स तत्र सम्मानभागपि बभूव। जनास्तमुद्यमिनं बालकं नितान्तं प्रेरणास्पदं मानयन्ति स्म।

एवं गच्छत्सु दिवसेषु कदाचित्स एव सत्पुरुषस्तेन फलविक्रेतृबालकेन तस्यां हट्टवीथिकायां दृष्टः। स्मृतिबलेन तं सम्यगभिज्ञाय सत्वरं गत्वा, तस्य पादयोः प्रणम्य, बद्धाञ्जलिः स बालकस्तमभ्यभाषत्- ''देवोपम निष्कारणकरुणानिवेश महानुभाव! पदं धारय, कृपयैह्येहि, पश्य निजं फलापणम्। आगत्याऽस्मिन्नुपविश, तव एव एषः।''

बालकस्येदृशेनानुरोधेनाऽत्यन्तं चकितः स पुरुषोऽब्रवीत्- ''किं कथयसि? नायं ममापणो भवितुमर्हति। नाहमस्य स्वामी। अत्र नास्ति मे कश्चिदापणः, कस्त्वम्? कथमेवं भाषसे? न त्वां प्रत्यवैमि। व्यर्थमेवास्मिन् प्रपञ्चे मां मिश्रयसि।''

किन्तु स बालको पौनःपुन्येन स्वीयानुरोधं दृढाद् दृढतरं करोति स्म। तस्यानुनयविधिना तत्र सम्मर्दः समाकृष्टः। तस्य महतानुरोधेन करुणया च प्रार्थनया दयार्द्रः सोऽपि पुरुषो निर्दिष्टं फलापणं गतवा कथं-कथञ्चित्तत्र तस्थौ।

अथ स बालकस्तं महापुरुषं सत्कृत्य सादरमुवाच- ''भवता नाहं प्रतीतोऽस्मि। अयमहं स एव याचकबालको यस्योत्तरेण प्रीतो भवान् तस्मै रुप्यकमेकं सहर्षं दत्तवान्। भवता प्रसादीकृतेन तेन धनेन, यथाप्रतिश्रुतं तथैव मया कृतमिति; फ़लव्यवसायं समारभ्याऽद्य फलविपणेः स्वामी संवृत्तोऽस्मि। एषा फलविपणिस्तवैव कृपाकटाक्षस्य फलमि''ति। सोत्साहं तं बालकं फलाढ्यां च तां विपणिं दर्शं दर्शं विस्मितोऽपि सस्मितः स पुनरपि तस्मै समुद्योगिने बालकाय शतं रुप्यकं पुरस्कारं प्रायच्छत्।

''सत्यवाक् त्वमुद्यमी दृढव्रतः सफलोऽसि। इदानीं दैवोऽपि त्वां नमति। अनेन धनेन संवर्धय स्वीयं व्यापारम्। द्रष्टुमहं पुनरप्यागमिष्यामी''त्युक्त्वा

तस्य च शिरसि हस्तं निधाय प्रीतिपुष्टः स ततो निर्ययौ।।

आसीदेको वणिक्पुत्रो हतभाग्यो निराश्रयः।
याचकश्चापरो बालो दीनो हीनस्तथाविधः।।१।।
स्वाभिमानी पुरावृत्ते दृढसङ्कल्पसंयुतः।
सुधनः स कथं जातः, पश्यतु बुद्धिकौशलम्।।२।।
नूत्ने वृत्तेऽपरो बालो दुर्दैवाद् यश्च याचकः।
भिक्षावृत्तिं परित्यज्य सत्यसङ्कल्पतां ययौ।।३।।
उद्यमोत्साहसम्पन्नौ बालकावत्र यौ स्मृतौ।
तयोर्गुणानुवादेन प्रीयन्तां सर्वबालकाः।।४।।
अल्पे वयसि तौ नूनं निरालम्बौ च निर्धनौ।
स्वल्पसाहाय्यमात्रेण स्वात्मनिर्भरताङ्गतौ।।५।।
योऽपि बालः पठत्येतां कथां सत्प्रेरणामयीम्।
सोऽवबुध्य कथातत्त्वं न कदाप्यवसीदति।।६।।
लोकवृत्तमिदं श्रुत्वा येऽपि भाग्यपरायणाः।
उद्यमेन सुखं कर्तुं नूनमर्हन्ति जीवनम्।।७।।
ये बालका युवानश्च भोगलिप्सापरायणाः।
भारभूताः कुटुम्बस्य नित्यं दुर्व्यसने रताः।।८।।
तेऽपि यान्तु शुभां वृत्तिं शुद्धबुद्धिविवेकतः।
स्मारं स्मारं कथामेतां सुनिबद्धां प्रयत्नतः।।९।।

●



कथाकारस्य परिचयः

| | |
|---|---|
| नाम | - **डॉ. प्रभुनाथ द्विवेदी** |
| पितरौ | - स्व. रामकुमारीदेवी- स्व. नन्दकिशोर द्विवेदी |
| जन्मतिथिः | - 25.08.1947 खि. |
| जन्मभूमिः | - ग्रामः- भैंसा (कछवा), मण्डलम्-मीरजापुरम् (उ.प्र.)। |
| वर्तमानः | |
| स्थायिनिवाससङ्केतः | - डी. 65/421 पी.एन. 2, 'निर्मलप्रभुः', निर्मलनगरम्, फुलवरियामार्गः, लहरतारा, वाराणसी-221002 (उ.प्र.) |
| शैक्षिकयोग्यता | - बी.एससी., एम.ए., पीएच.डी. |
| भाषाज्ञानम् | - संस्कृतम्, हिन्दी, आङ्ग्लभाषा। |
| विशेषज्ञता | - संस्कृतसाहित्यम् |
| अध्यापनानुभवः | - 33 वर्षाणि |

धारितपदानि -
- आचार्यचरः, संस्कृतविभागः, पूर्वप्रभारी-सङ्कायाध्यक्षश्च चिकित्साविज्ञानसङ्कायः, महात्मा गांधी काशी विद्यापीठम्, वाराणसी-221002।
- अभ्यागत - आचार्यचरः, साहित्यविभागः सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयः, वाराणसी-221002।
- मानद - आचार्यः, शङ्करशिक्षायतनम्, डी. 6/25, वसन्त विहारः, नवदेहली-110057।
- अध्यक्षः, रानीपद्मावती-तारायोगतन्त्रादर्श-संस्कृतमहाविद्यालयः, शिवपुरम्, वाराणसी-221003।

कर्तृत्वम्
- प्रकाशिताः ग्रन्थाः-31 (स्वोपज्ञसंस्कृतकथासङ्ग्रहाः-04)
- प्रकाशिताः/प्रस्तुताः शोधनिबन्धाः - 130
- अन्ये लेखाः + ललित निबन्धाः (हिन्दी) - 172
- आकाशवाणी + दूरदर्शनप्रसारणानि - 71
- शोधगोष्ठीषु सहभागित्वमाध्यक्ष्यं वा-
- राष्ट्रियासु - 160
- अन्ताराष्ट्रियासु - 08
- शोधपरियोजनाः - 04
- पीएच.डी. उपाधिप्राप्ताः शोधच्छात्राः - 35
- सम्मानाः पुरस्काराश्च - 29

सम्पर्कसूत्रम्
- दूरस्वनः - 0542-2373815, चल दूरस्वनः - 9415291980
- ई. मेल. - dr.p.n.dwivedi@gmail.com